SRI VENKATESVARA ORIENTAL SERIES—No. 27



Editor:—PROF. P. V. RAMANUJASWAMI, M.A.

# DHARMASANGRAHA

(A collection of moral sayings collected from the Itihasas and the Puranas)

EDITED BY
P. V. RAMANUJASWAMI, M.A.
DIRECTOR
*Sri Venkatesvara Oriental Institute, Tirupati*

PUBLISHED UNDER THE AUTHORITY OF
SRI C. ANNA RAO, B.A.
EXECUTIVE OFFICER
*T. T. Devasthanams on behalf of the Board of Trustees*




PRINTED AT
TIRUMALA-TIRUPATI DEVASTHANAMS PRESS
TIRUPATI
1951

विङ्कटेश्वरप्राच्यग्रन्थमाला, सं. २७.

सम्पादकः — परवस्तु वेङ्कटरामानुजस्वामी, एम्. ए.

# धर्मसङ्ग्रहः ।

[ इतिहासपुराणोद्धृतधर्मबोधकश्लोकसंचयात्मकः ]

श्रीवेङ्कटेश्वरप्राच्यकलाशालाध्यक्षेण,

परवस्तु वेङ्कटरामानुजस्वामिना

संकलितः ।

तिरुपति

तिरुमलै - तिरुपति देवस्थानमुद्रणालये

मुद्राप्य प्रकाशितः

१९५१.

# PREFACE.

THIS work is the outcome of a meeting of the Professors of the College convened for the purpose of considering the question of religious instruction in Schools and Colleges in all its aspects. It was unanimously agreed at the meeting that religious instruction was absolutely necessary in Schools and Colleges in order to shape the mind of the scholar and that a system of purely secular education tended to make the student sceptical. It was also felt that religious instruction would improve the discipline in the institutions by making the students respect authority and reject vagaries. At the same time it was realised that the best results could be attained only when religious instruction of the right type was imparted eschewing all kinds of bigotry and sectarianism. It was also urged that religious instruction could not be assigned to any and every teacher without some sort of guidance as otherwise the teachers might take things as religion which were not really so and teach irreligion in the name of religion. It was therefore decided that the best course was to compile a Manual of Religious or Moral instruction free from sectarianism for use in Schools and Colleges and advise the teachers to follow it in imparting religious instruction to the young students. Religious maxims of a non-dogmatic or un-sectarian nature are found in plenty in our Epics and Purāṇas and may be collected from them and compiled into a text-book.

To begin with, the two great Epics of our country have been taken and the Professors of the College were requested to collect suitable maxims from them for incorporation in the proposed Manual. As the Epics were great in extent and as the work was proposed to be carried on expeditiously they were divided, each into ten parts, and each of the

following Professors took upon himself the task ing the maxims from one part of both the E distribution of the work among the Professors below.

| No. | Name and designation of the Professor | Portion of the *Ramayana* | P M |
|---|---|---|---|
| 1. | Sri K. Dakshinamurti Prof. of Advaita Vedanta | Balakanda | Va F |
| 2. | Sri T. A. Varadachari Prof. of Sahitya | Ayodhyakanda First half | Va S |
| 3. | Sri A. Ramanathasastri Prof. of Mimamsa | Ayodhyakanda Second half | A F |
| 4. | Sri C. Raghavachari Prof. of Vyakarana | Aranyakanda | A F |
| 5. | Sri R. Ramamurtisarma Prof. of Vyakarana | Kishkindhakanda | A S |
| 6. | Sri S. Gopalakrishnachar Prof. of Sahitya | Sundarakanda | Sa F |
| 7. | Sri T. Viraraghavachari Prof. of Nyaya | Yuddhakanda First half | Sa . S |
| 8. | Sri T. K. V. N. Sudarsanachari Prof. of Nyaya | Yuddhakanda Second half | A S |
| 9. | Sri T. P. Viraraghavasarma Prof. of Sahitya | Uuttarakanda First half | Sa T |
| 10. | Sri N. S. Rajagapalatatachari Prof. of Nyaya | Uttarakanda Second half | U r |
| 11. | Sri N. Subrahmanyasastri, Curator, S. V. O. Institute | — | Sa |

After the lapse of a day or two, Sri T. P. Vir sarma pleadad inability to carry on the work t

by him and so that work had to be undertaken by me. Sri K. Dakshinamurti neither carried out the work taken up by him nor did he intimate his inability to do it. Hence that portion of the work too devolved upon me. While the work of selection was in progress Sri R. Parthasaradhi Bhattachar, the Agama Pandit of the College, informed me that he had collected similar maxims from the *Bhāgavatapurāṇa* and offered to place them at my disposal for incorporation in the Manual. I gladly and gratefully accepted his offer.

The excerpts are arranged under different heads according to their subject-matter and the headings are arranged in alphabetical order for the sake of easy reference. The teacher for his exposition may take the subjects one by one on each day, either in the order in which they are found in the Manual or otherwise, and expound them to the class for a few minutes, with illustrations, if necessary. The references given under the excerpts will help the teacher in collecting further information for his exposition or illustrations for the adage. The alphabetical arrangement will be helpful to the teacher in selecting the excerpts relating to any topic that he might have chosen for exposition to the class on any day.

The topics included in this Manual are fairly representative of the main tenets of our Religion and will be sufficient to edify the minds of the young boys in the Schools and Colleges. A judicious exposition is what is required of the teacher. If this is done, it will doubtless produce a religious consciousness in the student and he will take interest to pursue the course. This will make him assign new values to his experiences which is what is wanting in these days of hunting after material advancement, eclipsing every other consideration. Even a slight moral tinge will work wonders in shaping a boy's life in the right direction, and in a healthy manner, both to the body and the mind in it.

The book is mainly intended for the use of tea in helping them to select topics and to provide the sub for their talks. But it may also be useful for people wish to deliver general lectures on our religion and r it more popular.

I am very grateful to the Pandits of the College have helped me in compiling this Manual.

TIRUPATI
18—7—'51

P. V. RAMANUJASWAMI,
*Principal, S. V. Oriental College, an*
*Director S. V. O. Insi*

## विषयाः


| | | |
|---|---|---|
| अद्वेषः | .... | १ |
| अधर्मवर्जनम् | .... | ,, |
| अविक्षेपः | .... | ,, |
| अन्नदानम् | .... | ,, |
| अपयशः | .... | २ |
| अमरत्वम् | .... | ,, |
| अरिषड्वर्गः | .... | ,, |
| अर्थः | .... | ,, |
| अलसः | .... | ४ |
| अवतारः | .... | ,, |
| अवलेपः | .... | ५ |
| असत्सङ्गः | .... | ,, |
| असन्तोषः | .... | ६ |
| अस्तेयम् | .... | ,, |
| अहिंसा | .... | ,, |
| आततायिन् | .... | ८ |
| आतिथ्यम् | .... | ,, |
| आत्मप्रशंसा | .... | ९ |
| आत्मरक्षा (प्राणधारणम्) | .... | ,, |
| आत्मा | .... | १० |
| आधिः | .... | ११ |
| आयुष्यम् | .... | ,, |
| आर्जवम् | .... | ,, |
| ईश्वरः | .... | ,, |
| उत्तमपुरुषः (सज्जनः) | .... | १३ |
| उत्साहः | .... | ,, |
| उपवासः | .... | १४ |
| ऋणत्रयम् | .... | ,, |
| कन्या | .... | ,, |
| कर्म | .... | १५ |
| कलिः | .... | १८ |
| कामः | .... | ,, |
| कामक्रोधलोभाः | .... | १९ |
| कालः | .... | ,, |
| कीर्तिः | .... | २० |
| कृतघ्नता | .... | ,, |
| क्रोधः | .... | ,, |
| क्षमा | .... | २२ |
| क्षेत्रज्ञः | .... | २३ |
| गुणातीतः | .... | ,, |
| गुरवः | .... | ,, |
| गौः (महिमा) | .... | २४ |
| छिद्रम् | .... | २५ |
| जन्मान्तरम् | .... | ,, |
| जरामरणे | .... | २६ |
| जागरूकता | .... | ,, |
| जितेन्द्रियः | .... | ,, |
| जीवः | .... | ,, |

ज्ञानम् .... २६
तत्त्वज्ञानम् .... २७
तपः .... ,,
तितिक्षा .... २८
तीर्थप्रशंसा .... ,,
तृष्णा .... ,,
त्रिवर्गः .... २९
दण्डः ... ३०
दमः .... ,,
दया .... ३१
दानकालः .... ,,
दानम् .... ,,
दारिद्र्यम् .... ३२
दुःखम् .... ,,
दुःखभागिनः .... ३३
दुर्जनः .... ,,
दूषणम् .... ३४
देवः .... ,,
दैवभक्तिः .... ,,
दैवम् .... ,,
दोषाः .... ३७
द्वेषः .... ,,
धनम् .... ३८
धनविनियोगः .... ,,
धर्मः .... ,,
धर्ममार्गः .... ४२
धैर्यम् .... ४२
निर्वेदः .... ,,
निस्पृहत्वम् .... ४३
नृपः .... ,,
पञ्चयज्ञाः .... ,,
पण्डितः .... ,,
पतिः .... ४४
पथ्यवचनम् .... ४५
परद्रव्यवर्जनम् .... ,,
परबुद्धिः .... ४६
परस्त्रीवर्जनम् .... ,,
परिवादः .... ,,
पातिव्रत्यम् .... ,,
पानम् .... ४८
पापपुण्ये .... ,,
पापम् .... ,,
पिता .... ५०
पितृसेवा .... ५१
पुण्यदेशः .... ,,
पुण्यक्षेत्रम् .... ,,
पुत्रः .... ५२
पुनर्जन्म .... ५३
पुरुषकारः .... ,,
पुरुषभेदाः .... ,,
पुरुषोत्तमः .... ,,
प्रतिज्ञानिर्वाहः .... ५४

| | | | | | |
|---|---|---|---|---|---|
| प्रत्युपकारः | .... | ५४ | लोभः | .... | ६५ |
| परोपकारः | .... | ,, | वर्ज्यानि | .... | ,, |
| प्राणाः | .... | ,, | वाक्पारुष्यम् | .... | ६६ |
| बुद्धिः | .... | ५५ | विद्या | .... | ,, |
| भक्तिः | .... | ,, | विभूतिः | .... | ६७ |
| भगवत्कथा | .... | ५६ | विवेकः | .... | ,, |
| भागवतः | .... | ५७ | विष्णुनामसङ्कीर्तनम् | .... | ,, |
| भार्या | .... | ५८ | विष्णुपूजा | .... | ६८ |
| भूतानि | .... | ,, | वृत्तम् | .... | ,, |
| मद्यमांसनिषेधः | .... | ,, | वृद्धाः | .... | ,, |
| मनुष्यजन्म | .... | ५९ | वेदः | .... | ,, |
| मरणम् | .... | ,, | वैरम् | .... | ,, |
| मर्यादा | .... | ,, | वैराग्यम् | .... | ६९ |
| माया | .... | ,, | वैश्वदेवप्रशंसा | .... | ,, |
| मित्रम् | .... | ६० | व्यसनम् | .... | ७० |
| मूढः | .... | ६१ | शमः | .... | ,, |
| मृत्युः | .... | ,, | शरणम् | .... | ,, |
| यमलोकः | .... | ,, | शिष्यः | .... | ७१ |
| याचनम् | .... | ६२ | शीलम् | .... | ,, |
| योगः | .... | ६३ | शुश्रूषा | .... | ,, |
| रागः | .... | ,, | शोकः | .... | ७२ |
| राजदोषः | .... | ६४ | सङ्गः | .... | ,, |
| राजधर्मः | .... | ,, | सज्जनः | .... | ७३ |
| राजा | .... | ,, | सत्त्वरजस्तमांसि | .... | ७५ |
| रामराज्यम् | .... | ,, | सत्यम् | .... | ७६ |
| रिपुः | .... | ६५ | सत्सङ्गः | .... | ७८ |

सद्गुणाः .... ७२
सन्तोषः .... ७९
सभा .... ८०
सम्पत्तिः .... ,,
सात्त्विकत्यागः .... ,,
साधकलक्षणम् .... ,,
साधुत्वम् .... ,,
सामर्थ्यम् .... ८१
साक्षी .... ८२
सुखदुःखे .... ,,
संशयः .... ८३
स्त्रियः .... ,,
स्थिरवासः .... ,,
स्नेहः .... ,,
स्वभावः .... ८५
हितम् .... ,,

श्रीः

श्रीवेङ्कटेशाय नमः

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ १ ॥

कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ २ ॥

त्वमादिदेवः पुरुषः पुराणः
त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३ ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ४ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ५ ॥

पिताऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ६ ॥

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ७ ॥

अ. ११. ३६—४०, ४३, ४४.

# धर्मसङ्ग्रहः ।

## अद्रोषः

यदि घातयते कश्चित् पापसत्त्वं प्रजाहिते ।
सर्वसत्त्वहितार्थाय न तेनासौ विहिंसकः ॥

म. शा. १०९—१२.

## अधर्मवर्जनम्

न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो [भवद्विधाः] ॥

रा. सु. ५१—१८.

## अधिक्षेपः

हीनाङ्गान् अतिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान् ।
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥

म. आनु. ९४—६२.

## अन्नदानम्

सर्वेषामेव दानानां अन्नं श्रेष्ठमुदाहृतम् ।
पूर्वमन्नं प्रदातव्यं ऋजुना धर्ममिच्छता ॥

अन्नमेव प्रशंसन्ति देवर्षिपितृमानवाः ।
अन्नस्य तु प्रदानेन स्वर्गमाप्नोति मानवः ॥

म, आनु. १०१—८, १०.

## अपयशः

सम्भावितस्य चाकीर्तिः मरणादतिरिच्यते ।

म. स. ५१—५

## अमरत्वम्

नास्ति सर्वामरत्वं हि कस्यचित्प्राणिनो भुवि ।
चतुष्पदः पक्षिणश्च भूतानां वा महौजसाम् ॥

रा. उ. ३०—११, १

## अरिषड्वर्गः

अरयः षट् विजेतव्याः नित्यं स्वं देहमाश्रिताः ।
कामक्रोधौ च लोभश्च मानमोहौ मदस्तथा ॥

म. आनु. ८४—८

## अर्थः

१

अर्थेभ्योऽथ विवृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥

अर्थेन हि विमुक्तस्य पुरुषस्याल्पचेतसः ।
विच्छिद्यन्ते क्रियास्सर्वाः ग्रीष्मे कुसरितो यथा ॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थास्स पुमान् लोके यस्यार्थास्स च पण्डितः ॥

यस्यार्थास्स च विक्रान्तः यस्यार्थास्स च बुद्धिमान् ।
यस्यार्थास्स महाभागः यस्यार्थाः स गुणाधिकः ॥

यस्यार्था धर्मकामार्थाः तस्य सर्वं प्रदक्षिणम् ।
अधनेनार्थकामेन नार्थः शक्यो विचिन्वता ॥
हर्षः कामश्च दर्पश्च धर्मः क्रोधश्शमो दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥

रा. यु. ८३—३२, ३३, ३५, ३६, ३८, ३९.

२

अर्थानामार्जने दुःखं आर्जितानां तु रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥
अर्थवन्तं नरं नित्यं पञ्चाभिघ्नन्ति शत्रवः ।
राजा चोरश्च दायादाः भूतानि क्षय एव च ॥
अर्थमेवमनर्थस्य मूलमित्यवधारय ।
न ह्यनर्थाः प्रबाधन्ते नरमर्थविवर्जितम् ॥
अर्थप्राप्तिर्महद्दुःखं आकिञ्चन्यं परं सुखम् ।
उपद्रवेषु चार्थानां दुःखं हि नियतं भवेत् ॥
धनलोभेन तृष्णाया न तृप्तिरुपलभ्यते ।
लब्धाश्रयो विवर्धेत समिद्ध इव पावकः ॥

म. आनु. १३१—५९, ६०, ६१, ६२, ६३.

३

राजतस्सलिलादग्नेः चोरतस्स्वजनादपि ।
अर्थिभ्यः कालतस्तस्मात् नित्यमर्थवतां भयम् ॥

४

अर्थ एव हि केषांचित् अनर्थो भविता नृणाम् ।
अर्थ श्रेयसि चासक्तः न श्रेयो विन्दते नरः ॥

तस्मादर्थागमास्सर्वे मनोमोहविवर्धनाः ।
कार्पण्यं दर्पमानौ च भयमुद्वेग एव च ।
अर्थजानि विदुः प्राज्ञाः दुःखान्येतानि देहिनाम् ॥

५

प्रायेणार्थाः कदर्याणां न सुखाय कदाचन ।
इह चात्मोपतापाय मृतस्य नरकाय च ॥
यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ।
लोभः स्वल्पोऽपि तान् हन्ति श्वित्रो रूपमिवेप्सितम् ॥

भा. ११, २३—१५, १६.

## अलसः

अलक्ष्मीराविशत्येनं शयानमलसं नरम् ।
उत्थानयुक्तस्सततं परेषामन्तरेक्षणः ॥

## अवतारः

१

नष्टधर्मव्यवस्थानां काले काले प्रजाकरः ।
उत्पद्यते दस्युवधे शरणागतवत्सलः ॥

रा. उ. ८—२७.

२

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

भ. ४—७, ८.

# अवलेपः

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥

म. शा. १३०—४५.

# असत्सङ्गः

१

सतां मतमतिक्रम्य योऽसतां सेवते मतम् ।
शोचन्ते व्यसने तस्य सुहृदो न चिरादिव ॥

योऽसत्सेवी वृथाऽऽचारः न श्रोता सुहृदां सताम् ।
परान् वृणीते स्वान् द्वेष्टि तं गौः (श्रीः) त्यजति भारत ॥

म. उ. १११—२७, २९.

२

असतां दर्शनात् स्पर्शात् सम्भाषणसहासनात् ।
धर्माचाराः प्रहीयन्ते न च सिद्ध्यन्ति मानवाः ।
बुद्धिश्च हीयते पुंसां नीचैस्सह समागमात् ॥

३

यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ।
न श्लेषमुपगच्छन्ति तथाऽनार्येषु सङ्गतम् ॥

यथा शरदि मेघानां गर्जतामपि सिञ्चताम् ।
न भवत्यम्बुसंक्लेदः तथाऽनार्येषु सौहृदम् ॥

रा. यु. १६—११, १५.

## असन्तोषः

असन्तोषोऽसुखायैव लोभादिन्द्रियविभ्रमः ।
ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्जिता ॥

म. शा. २७९—२५.

## अस्तेयम्

१

नाददीत परस्वानि न गृह्णीयादयाचितम् ।
लब्धालब्धेन जीवेत तथैव परिपोषयेत् ॥

म. आनु. ८४—११७.

२

न स्तेयसदृशं ब्रह्मन् महापातकमस्ति हि ।

म. शा. २२—४१.

## अहिंसा

१

अहिंसा परमं सत्यं ततो धर्मः प्रवर्तते ।

म. आनु. १०४—२५.

२

अहिंसा परमो धर्मः सर्वप्राणभृतां वर ।
तस्मात्प्राणभृतस्सर्वान् न हिंस्यान्मानुषः क्वचित् ॥

म. आदि. ८—४३

३

न हिंस्यात् सर्वभूतानि मैत्रायणगतिश्चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ॥

म. शा. २६२—६.

४

जरायुजाण्डजाश्चैव उद्भिज्जास्स्वेदजाश्च ये ।
अवध्यास्सर्व एवैते बुधैस्समनुवर्णिताः ॥

म. आनु. ८४—१२१.

५

न हि प्राणात् प्रियतरं लोके किञ्चन विद्यते ।
तस्माद्दयां नरः कुर्यात् यथाऽऽत्मनि तथा परे ॥

अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
अभयं तस्य भूतानि ददतीत्यनुशुश्रुम ॥

म. आनु. १०५—२३, २५.

६

कर्मणा न नरः कुर्वन् हिंसां पार्थिवसत्तम ।
वाचा च मनसा चैव ततो दुःखात्प्रमुच्यते ॥

मा. आनु. १०३—२.

७

स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
अविश्वास्योऽवसीदेत् सः इति होवाच नारदः ॥

सर्वभूतेषु यो विद्वान् ददात्यभयदक्षिणाम् ।
दाता भवति लोके स प्राणानां नात्र संशयः ॥

प्राणा यथाऽऽत्मनोऽभीष्टाः भूतानामपि वै तथा ।
आत्मौपम्येन गन्तव्यं बुद्धिमद्भिर्महात्मभिः ॥

धर्मस्यायतनं तस्मान्मांसस्य परिवर्जनम् ।
अहिंसा परमो धर्मः अहिंसा परमं तपः ॥

म. आनु. १०४—१४, २०, २२, २४.

८

स्निग्धैश्च क्रियमाणानि कर्माणि विनिवर्तयेत् ।
हिंसात्मकानि सर्वाणि नायुरिच्छेत् परायुषा ॥

म. शा. २८१—९

# आततायिन्

आत्महन्ताऽर्थहन्ता च बन्धुहन्ता विषप्रदः ।
आथर्वणेन हन्ता च यश्च भार्यां परामृशेत् ।
निर्दोषं वधमेतेषां षण्णामप्याततायिनाम् ॥

म. शा. १४—७९, ८०.

# आतिथ्यम्

१

ऋषीणां देवतानां च पितॄणां च महात्मनाम् ।
श्रुतः पूर्वो मया धर्मः महानतिथिपूजने ॥

म. शा. १३४—३९

२

अतिथिः पूजितो यद्धि मनसा ध्यायते शुभम् ।
न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः ॥

पात्रं चातिथिमासाद्य शीलाढ्यं यो न पूजयेत् ।
सुदत्तं सुकृतं वाऽपि क्षपयेदप्यनर्चितः ॥

म. आनु. २—११० १११.

३

देयमार्तस्य शयनं स्थितश्रान्तस्य चासनम् ।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥

चक्षुर्दद्यान्मनो दद्यात् वाचं दद्याच्च सूनृताम् ।
प्रत्युद्गम्याभिगमनं कुर्यान्न्यायेन चार्थनाम् ॥

आत्मार्थं न पचेदन्नं न वृथा घातयेत्पशुम् ।
न चैकः स्वयमश्नीयात् विधिवर्जं न निर्वपेत् ॥

# आत्मप्रशंसा

कामं नैव प्रशंसन्ति सन्तः स्वबलसंस्तवम् ।
गुणसङ्कीर्तनं चापि स्वयमेव शतक्रतो ॥

म, आदि. २६—२.

# आत्मरक्षा (प्राणधारणम्)

१

विनाशे बहवो दोषाः जीवन् भद्राणि पश्यति ।

रा. सु. १३—४७.

२

एति जीवन्तमानन्दो नरं वर्षशतादपि ।

रा. सु. ३४ - ६.

३

जीवन् पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ।

म. शा. १३१—१२.

४

उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः ।
चण्डालत्वेऽपि मानुष्यं सर्वथा तात शोभनम् ॥

म. शा. २८१—३२.

५

आत्मार्थे सन्ततिस्त्यज्या राज्यं रत्नं धनानि च ।
अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मवान् ।
आत्मा हि सर्वदा रक्ष्यो दारैरपि धनैरपि ॥

म. शा. १२८.—१६९, १७

६

आपन्निस्तरणे प्राणान् धारयेद्येनकेनचित् ।
सर्वमापत्सु कर्तव्यं तद्धर्ममनुपश्यताम् ॥

आपत्सु यो धारयति स वै धर्मविदुत्तमः ।
व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते ॥

पुण्यं प्राणान् धारयति पुण्यं वै प्राणधारणम् ।
येन येन चरेद्धर्मं तस्मिन् गर्हा न विद्यते ॥

म. आदि. १५१—२१॥, २२॥, २३॥, २४॥.

७

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥

म. आदि. ६४—२५.

## आत्मा

१

सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः ।
इतरेऽपत्यवित्ताद्याः तद्वल्लभतयैव हि ॥

भा. १०, १४—५०,

२

प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः ।
यत्सम्पर्कात्प्रिया आसंस्ततः कोन्वपरः प्रियः ॥

भा. १०, २३—२७.

## आधिः

मानसेनैव दुःखेन शरीरमुपतप्यते ।
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ॥

मानसं शमयेत्तस्मात् ज्ञानेनाग्निमिवाम्बुना ।
प्रशान्ते मानसे दुःखे शरीरमुपशाम्यति ॥

## आयुष्यम्

अहिंसा सत्यवचनं अक्रोधः क्षान्तिरार्जवम् ।
गुरूणां नित्यशुश्रूषा वृद्धानामपि पूजनम् ॥

शौचादकार्यसन्त्यागः सदा पथ्यस्य भोजनम् ।
एवमादिगुणं वृत्तं नराणां दीर्घजीविनाम् ॥

म आ. १२५—१६४, १६५.

## आर्जवम्

आर्जवेभ्योऽपि सर्वेभ्यः स्वार्जवाद्वेतनं हरेत् ।
अनार्जवादाहरतः तत्तु पापाय कल्पते ॥

म. आ. १२२—३०.

## ईश्वरः

१

ईश्वरस्य वशे लोकस्तिष्ठते नात्मनो यथा ।

धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥

२

आकाश इव भूतानि व्याप्य सर्वाणि भारत ।
ईश्वरो विदधातीह कल्याणं यच्च पावकम् ॥

३

मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ।
धातुरादेशमन्वेति तन्मयो हि तदर्पणम् ॥

नात्माधीनो मनुष्योऽयं कालं भजति कश्चन ।
स्रोतसो मध्यमापन्नः कूलवृक्ष इव च्युतः ॥

अज्ञो जन्तुरनीशोऽयं आत्मनस्सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं (च श्वभ्रमेव वा) नरकमेव वा ॥

यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ।
धातुरेवं वशं यान्ति सर्वभूतानि भारत ॥

हेतुमात्रमिदं धातुः शरीरं क्षेत्रसंहितम् ।
येन कारयते कर्म शुभाशुभफलं विभुः ॥

४

क्रीडते भगवान् भूतैः बालः क्रीडनकैरिव ।
कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति ॥

कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ।
धाताऽपि हि स्वकर्मैव तैस्तैर्हेतुमिरीश्वरः ॥

विदधाति विभज्येह फलं पूर्वकृतं नृणाम् ।
यद्धि यः पुरुषः कश्चित् कुरुते वै शुभाशुभम् ।
तद्धाता विहितं विद्धि पूर्वकर्मफलोदयम् ॥

५

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥

म. १८—६१, ६२.

## उत्तमपुरुषः (सज्जनः)

१

उद्यमो रक्षणे स्वेषां एतद्विभवलक्षणम् ।
विपत्तिष्वव्यथो दक्षः नित्यमुत्थानवान् यतः ।
अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥

म. स. ५३—९, १०

२

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥

## उत्साहः

१

उत्साहो बलवानार्य नास्त्युत्साहात्परं बलम् ।
सोत्साहस्यास्ति लोकेषु न किञ्चिदपि दुर्लभम् ।
उत्साहवन्तः पुरुषाः नावसीदन्ति कर्मसु ॥

रा. कि. १—१२२, १२३.

२

अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ।
करोति सफलं जन्तोः कर्म यत् तत्करोति सः ॥

रा. सु. १२,—१०.

३

निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः ।
सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ॥

रा. यु. २—६.

## उपवासः

मलिनं हि यथा वस्त्रं पश्चाच्छुद्ध्यति वारिणा ।
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥

म. शा. ३०८—१७.

## ऋणत्रयम्

ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितृणां प्रभो ।
यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत् ॥

भा. १०, ८४—३९.

## कन्या

कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणाम् ।
मातुः कुलं पितृकुलं यत्र चैव च दीयते ।
कुलत्रयं सदा कन्या संशये स्थाप्य तिष्ठति ॥

रा. उ. ९—१०, ११.

# कर्म

१

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥

भ. ३—५.

२

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
तस्मादसक्तः सततं कार्यं कर्म समाचर ॥

भ. ३—८, १९.

३

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥
स्वभावनियतं कर्म कुर्वन् नाप्नोति किल्बिषम् ।
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ॥

भ. १८—४५, ४७, ४८.

४

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

भ. ३—२१.

५

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥

भ. २—४७.

६

तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ।

भा. ४, २९—४९.

७

कर्म चैव हि सर्वेषां कारणानां प्रयोजनम् ।
श्रेयः पापीयसां चात्र फलं भवति कर्मणाम् ॥

रा. यु. ६४—५

८

अवश्यमेव लभते फलं पापस्य कर्मणः ।

रा. यु. ११४—२५

९

यदाचरति कल्याणि शुभं वा यदि वाऽशुभम् ।
तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥

रा. अयो. ६३—

१०

शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते ।

रा. यु. ११४ २

११

शुभाशुभं कर्मफलं न शक्यमतिवर्तितुम् ।
तथा ताभिश्च भर्तव्यं भोक्तव्याश्चैव तास्तथा ॥

म. आ. १२०—१

१२

शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं सर्वत्र लभते नाकृतं भुज्यते क्वचित् ॥

म. आ. ६—८

१३

यत्करोति तदश्नाति शुभं वा यदि वाऽशुभम् ।
नाकृतं भुज्यते कर्म न कृतं नश्यते फलम् ॥

शुभकर्मसमाचारः शुभमेवाप्नुते फलम् ।
तथाऽशुभसमाचारो ह्यशुभं समवाप्नुते ॥

कर्मभिः पार्थ नानात्वं लोकानां यान्ति मानवाः ।
पुण्यान् पुण्यकृतो यान्ति पापान् पापकृतो जनाः ॥

म. आ. ८४—२२०, २२१, ९२—२.

१४

यादृशं कुरुते कर्म तादृशं फलमश्नुते ।
स्वकृतस्य फलं भुङ्क्ते नान्यस्तद्भोक्तुमर्हति ॥

पूर्वजन्मकृतं कर्म भुञ्जते तदिह प्रजाः ।
इहैव यत्कर्मकृतं तत्परत्र फलत्युत ॥

सत्यं प्राणिदया शौचं श्रेयः प्रीतिः क्षमा दमः ।
एवमादि तथाऽन्यच्च कर्म सात्त्विकमुच्यते ॥

म. आ. १२३—३७, १२५—८०, १८३.

१५

न नश्यति कृतं कर्म शुभं वा यदि वाऽशुभम् ॥
इह यत्कुरुते श्रेयः तत् प्रेत्य समुपाश्नुते ।

तच्चानसूयया कार्यं कर्तव्यं यद्धि मन्यते ॥
असूयया कृतस्येह फलं दुःखादवाप्यते ।

म. आ. ८४—२०८, ७६, ७६८.

१६

स्वयं कृतानि कर्माणि जातो जन्तुः प्रपद्यते ।
नाकृत्वा लभते कश्चित् किञ्चिदत्र प्रियाप्रियम् ॥

म. शा. २८२—२९.

१७

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥

म. शा. ३०८—१६.

## कलिः

१

कलेर्दोषनिधे राजन् अस्ति ह्येको महागुणः ।
कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥

कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥

भा. १२—५१, ५२.

२

कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥

न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।

यतो विन्देत परमां शान्तिं नश्यति संसृतिः ।
कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् ॥

भा. ११, ५—३६, ३७. ३८.

## कामः

१

हित्वा धर्मं तथाऽर्थं च कामं यस्तु निषेवते ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥

रा. कि. ३८—२२.

२

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

भा. ९, १९—१४.

३

कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ।
अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते ॥

भा. ११, २१—२७.

## कामक्रोधलोभाः

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामं क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥

भ. १६—२१.

## कालः

१

मासर्तुसंज्ञापरिवर्तनेन सूर्याग्निना रात्रिदिवेन्धनेन ।
स्वकर्मनिष्ठाफलसाक्षिकेण भूतानि कालः पचति प्रसह्य ॥

म. शा. ३०७—७०

२

कालेन क्रियते कार्यं तथैव विविधाः क्रियाः ।
कालेनैव प्रवर्तन्ते कः कस्येत्यपराध्यति ॥

तुल्यं चोभे प्रवर्तन्ते मरणं जन्म चैव हि ।
कार्यते चैव कालेन तन्निमित्तं न जीवति ॥

म. शा. १२९—४६, ४७.

३

न कालः कालमत्येति न कालः परिहीयते ।
स्वभावश्च समासाद्य न कश्चिदतिवर्तते ॥

न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः ।
न मित्रज्ञातिसम्बन्धः कारणं नात्मनो वशः ॥

किन्तु कालपरीणामो द्रष्टव्यः साधु पश्यता ।
धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥

रा. कि. २५—६, ७, ८

## कीर्तिः

योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ।
नाचिनोति स्वयंकल्पः स वाच्यः शोच्य एव सः ॥

भा. १०, ७२—२०

## कृतघ्नता

क्षान्तान् दान्तांस्तथा प्राज्ञान् दीर्घकालं सहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥

म. आ. २९—७८

## क्रोधः

१

धन्यास्ते पुरुषश्रेष्ठाः ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥

क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥

वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥

यस्समुत्पतितं क्रोधं क्षमयैव निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥

रा. सु. ५५—४, ५, ६, ७.

२

हिंस्यात्क्रोधादवध्यांस्तु वध्यान् सम्पूजयेदपि ।
आत्मानमपि वा क्रुद्धः प्रेषयेद्यमसादनम् ॥

यस्तु क्रोधं समुत्पन्नं प्रज्ञया परिबाधते ।
तेजस्विनं तं विदुषो मन्यन्ते तत्त्वदर्शिनः ॥

न कार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति ॥

हन्युश्च पितरः पुत्रान् पुत्राश्चापि तथा पितॄन् ।
हन्युश्च पतयो भार्याः पतीन् भार्यास्तथैव च ॥

३

पुत्रभृत्यसुहृन्मित्रभार्या धर्मस्य सत्यता ।
तस्यैतान्यपयास्यन्ति क्रोधशीलस्य निश्चितम् ॥

म. आदि. ६३—९.

४

सर्वोपायैस्तु कामस्य क्रोधस्य च विनिग्रहः ।
कार्यः श्रेयोऽर्थिना, तौ हि श्रेयोघातार्थमुद्यतौ ॥

म. शा. २१५—१०.

# क्षमा

१

अलङ्कारो हि नारीणां क्षमा तु पुरुषस्य वा ।

क्षमा दानं क्षमा सत्यं क्षमा यज्ञश्च पुत्रिकाः ।
क्षमा यशः क्षमा धर्मः क्षमायां विष्ठितं जगत् ॥

रा. वा. ३२   ७, ८.

२

क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
यस्तमेवं विजानाति स सर्वं क्षन्तुमर्हति ॥

क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौचं क्षमया चोद्धृतं जगत् ॥

अतियज्ञविदां लोकान् क्षमिणः प्राप्नुवन्ति तान् ।
अतिब्रह्मविदां लोकान् अति          तपस्विनाम् ॥

क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ।

क्षमा सत्यं सत्यवतां क्षमा दानं क्षमा यशः ।
एतदात्मवतां वृत्तं एष धर्मः सनातनः ॥

३

एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तं अशक्तं मन्यते जनः ॥

सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं सुखम् ।
क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा ॥

म. उ. ३२—५६, ५७.

## क्षेत्रज्ञः

१

एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥

क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तत् ज्ञानं मतं मम ॥

भ. १३—२, ३

२

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।

भ. १३—२.

## गुणातीतः

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरः तुल्यनिन्दात्मसंस्तुतिः ॥

मानापमानयोस्तुल्यः तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥

भ. १४—२४, २५.

## गुरवः

१

पुरुषस्येह जातस्य भवन्ति गुरवस्त्रयः ।
आचार्यश्चैव काकुत्स्थ पिता माता च राघव ॥

पिता ह्येनं जनयति पुरुषं पुरुषर्षभ ।
प्रज्ञां ददाति चाचार्यः तस्मात्स गुरुरुच्यते ॥

रा. अ. १११—२, ३.

२

ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति ।
त्रयस्ते पितरो ज्ञेयाः धर्मे वर्त्मनि वर्तिनः ॥

रा. कि. १८—१३.

३

पञ्चाग्नयो मनुष्येण परिचर्या विशेषतः ।
पिता माताऽग्निरात्मा च गुरुश्च भरतर्षभ ॥

म. उ. ३२—८१.

४

गुरोश्च वचनं प्राहुः धर्म्यं धर्मभृतां वर ।
गुरूणां चैव सर्वेषां जनित्री परमो गुरुः ॥

म. आदि.

५

गुरोर्वै वचनं पुण्यं स्वर्ग्यमायुष्करं नृणाम् ।
गुरुप्रसादात् त्रैलोक्यं अन्वशासच्छतक्रतुः ॥

म. आदि. ६८—३२.

६

गुरूणामासनं देयं अभिवाद्याभिपूज्य च ।
गुरुमभ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया ॥

म. आदि. १५२—४७.

## गौः (महिमा)

१

कीर्तनं श्रवणं दानं दर्शनञ्चापि पार्थिव ।
गवां प्रशस्यते विप्रैः सर्वपापहरं शिवम् ॥

गावो लक्ष्म्यास्सदा मूलं गोषु पाप्मा न विद्यते ।
अन्नमेव सदा गावो देवानां परमं हविः ॥

म. आ. ४५—५२. ५४.

२

यावन्ति रोमाणि भवन्ति धेन्वा युगानि तावन्ति पुनाति दातॄन् ।
प्रतिग्रहीतॄंश्च पुनाति दत्ता शिष्टे तु गौर्वै प्रतिपादनेन ॥

म. आ. ७१—६६.

## छिद्रम्

यतो हि निम्नं भवति नयतीह ततो जलम् ।
यतश्छिद्रं ततश्चापि नयन्ति विदुषो बलम् ॥

म. स. २१—१७.

## जन्मान्तरम्

१

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति ॥

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥

भ. २—१३, २२.

२

जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च ॥

भ. २—२७.

4

## जरामरणे

ऐश्वर्यं धनधान्यं च विद्यालाभस्तपस्तथा ।
रसायनप्रयोगो वा न तरन्ति जरान्तकौ ॥

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
कोऽपि तद्वेद यत्रासौ मृत्युना नाभिवीक्षितः ॥

म. आ. १३१—९६, १०६.

## जागरूकता

अनागतविधानन्तु कर्तव्यं शुभमिच्छता ।
आपदं शङ्कमानेन पुरुषेण विपश्चिता ॥

रा. आ. २४—११.

## जितेन्द्रियः

भयं प्रमत्तस्य वनेष्वपि स्याद्यतः स आस्ते सहषट्सपत्नः ।
जितेन्द्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किन्नु करोत्यवद्यम् ॥

भा. ५, १—१७.

## जीवः

ममैवांशो जीवलोके जीवभूतः सनातनः ॥

भ. १५—७.

## ज्ञानम्

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥

भ. ४—३७, ८.

# तत्त्वज्ञानम्

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥

म. शा. २४—२०.

## तपः

१

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥

भ. १७—१४, १६.

२

यज्ञो दानं दया वेदाः सत्यं च पृथिवीपते ।
पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः ॥

म. शा. १२५—४७.

३

तपश्चर्यापरः सत्यं पापाद्धि परिमुच्यते ।

म. शा. १३५—६६.

## तितिक्षा

१

धन्याः खलु महात्मनो मुनयस्त्यक्तकिल्बिषाः ।
जितात्मनो महाभागाः येषां न स्तः प्रियाप्रिये ॥

प्रियान्न सम्भवेद्दुःखमप्रियादधिकं भयम् ।
ताभ्यां हि ये वियुज्यन्ते नमस्तेषां महात्मनाम् ॥

रा. सु. २६—४९, ५०.

२

अतिवादांस्तितिक्षेत नातिमन्येत् कथञ्चन ।
क्रोध्यमानः प्रियं ब्रूयात् आक्रुष्टः कुशलं वदेत् ॥

म. शा. २६२—७.

३

न बिभेति परो यस्मात् न बिभेति पराच्च यः ।
यश्च नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तु सः ॥

म. शा. ३१२—३३.

## तीर्थप्रशंसा

कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ।
न तेन किञ्चिदप्राप्यं तीर्थाभिगमनाद्भवेत् ॥

म. आ. ३१—६२.

## तृष्णा

१

यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते ।
तथैव तृष्णा वित्तेन वर्धमानेन वर्धते ॥

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैतत् कलां नार्हति षोडशीम् ॥

या दुस्त्यजा दुर्मतिभिः या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगः तां तृष्णां त्यजतस्सुखम् ॥

म. शा. २६१—७, ६, १२.

२

तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी नृणाम् ।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥

अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम् ।
विनाशयति सम्भूता अयोरज इवानलः ॥

यथाऽयःस्वसमुत्थेन वह्निना नाशमृच्छति ।
तथाऽकृतात्मा लोभेन सहजेन विनश्यति ॥

३

यावन्तो विषयाः प्रेष्ठाः त्रिलोक्यामजितेन्द्रियम् ।
न शक्नुवन्ति ते सर्वे प्रतिपूरयितुं नृप ॥

भा ८, १९—२१.

## त्रिवर्गः

सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते ॥

तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।
क्रीडतो रममाणस्य मीनस्येवाम्भसः क्षये ॥

तस्माद्धर्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः ।
सर्वथा धर्ममूलोऽर्थः धर्मश्चार्थपरिग्रहः ॥
अर्थार्थी पुरुषो राजन् बृहन्तं धर्ममृच्छति ।
इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च ॥
विषये वर्तमानानां या प्रीतिरुपजायते ।
स काम इति मे बुद्धिः कर्मणां फलमुत्तमम् ॥
एवमेव पृथक् दृष्ट्वा धर्मार्थौ काममेव च ।
न धर्मपर एव स्यात् न चार्थपरमो नरः ।
न कामपरमो वा स्यात् सर्वान् सेवेत सर्वदा ॥

## दण्डः

१

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तस्सुकृतिनो यथा ॥

रा. कि. १८—३२.

२

ये नृपैर्दण्डिता भूमौ अपराधापदेशतः ।
यमलोके न दण्ड्यन्ते तत्र ते यमदण्डनैः ॥
अदण्डिता वा ये तथ्या मिथ्या वा दण्डिता भुवि ।
तान् यमो दण्डयत्येव स हि वेद कृताकृतम् ॥

म. आ. १२५—९३.

## दमः

दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम ।
दमो हि परमो धर्मः प्रशस्तः सर्वकर्मणाम् ॥

म. शा. २४०—२०.

## दया

१

येन केनचिदार्तानां ज्ञातीनां यत्सुखावहम् ।
सर्वमादृत्य कर्तव्यं एष धर्मस्सनातनः ॥

म. आदि. ६४—३२.

२

स्थावरेषु दयां कुर्यात् जङ्गमेषु च प्राणिषु ।
यथाऽऽत्मनि तथाऽन्येषु समां दृष्टिं समापयेत् ॥

म. आ. ८४—११८, ११८॥.

## दानकालः

दैवं पौर्वाह्णिके कुर्यात् अपराह्णे तु पैतृकम् ।
मङ्गलाचारसम्पन्नः कृतशौचः प्रयत्नवान् ॥

मनुष्याणां तु मध्याह्ने प्रदद्यादुपपत्तितः ।
कालहीनं च यद्दानं तद्भागं रक्षसां विदुः ॥

म. आ. २९—२, ३.

## दानम्

१

यद्यद्ददाति पुरुषः तत्तत्प्राप्नोति केवलम् ।
नानुप्तं रोहते सस्यं तद्वद्दानफलं विदुः ॥

रूपं द्रव्यं बलं चायुः भोगैश्वर्यं कुलं श्रुतम् ।
इत्येतत्सर्वसाद्गुण्यं दानाद्भवति नान्यथा ॥

म. आ. १२६—६३.

२

अभिगम्य दत्तं सन्तुष्ट्या यत्तदाहुरभिष्टुतम् ।
याचितेन तु यद्दत्तं तदाहुर्मध्यमं फलम् ॥
अवज्ञया दीयते यत् तथैवाश्रद्धयाऽपि च ।
तदाहुरधमं दानं मुनयस्सत्यवादिनः ॥

म. शा. २७७—१९, २०.

३

न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते ।
दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः ॥
धर्माय यशसेऽर्थाय कामाय स्वजनाय च ।
पञ्चधा विभजन्वित्तमिहामुत्र च मोदते ॥

## दारिद्र्यम्

असतः श्रीमदान्धस्य दारिद्र्यं परमञ्जनम् ।
आत्मौपम्येन भूतानि दरिद्रः परमीक्षते ॥

भा १०, १०—२३.

## दुःखम्

दुःखादुद्विजते सर्वं सर्वस्य सुखमीप्सितम् ।
दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः ॥
दुःखं चानिष्टसंवासो दुःखमिष्टवियोगजम् ।
वैरबन्धकृतं दुःखं स्त्रीकृतं सहजं तथा ॥
दुःखं दुःखेन सततं विवर्धति नराधिप ।
न दुःखं परदुःखं वै केचिदाहुरबुद्धयः ॥

म. शा. १३९—६० ६३

# दुःखभागिनः

रोरूप्यमाणः कटुकं ईर्ष्यकः कटुकाक्षरः ।
शठकः श्लाघकः क्षेप्ता हन्ता च विचिकित्सिता ॥
विश्वस्तहन्ता मायावी क्रोधनोऽनृतभाषिता ।
अत्याशी नास्तिकोऽदाता मित्रध्रुक् सर्वकर्कशः ॥
आक्रोष्टा चातिमानी च रौद्रो लुब्धोऽथ लोलुपः ।
स्तेनश्च मद्यपश्चैव भ्रूणहा गुरुतल्पगः ॥
सम्भावितात्मा चात्यर्थं नृशंसः पुरुषश्च यः ।
नैते लोकानाप्नुवन्ति निर्लोकास्ते धनञ्जय ॥

# दुर्जनः

१

पांसुपातेन हृष्यन्ति कुञ्जरा मदशालिनः ।
तथा परिवदन्नन्यान् हृष्टो भवति दुर्जनः ॥

म. आदि. ८७—११.

२

निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥

रा. अयो. १०९—३.

३

प्रशमश्च क्षमा चैव आर्जवं प्रियवादिता ।
असामर्थ्यं फलन्त्येते निर्गुणेषु सतां गुणाः ॥

रा. यु. २१—१४.

## दूषणम्

न चक्षुषा न मनसा न वाचा दूषयेत्परम् ।
न प्रत्यक्षं परोक्षं वा दूषणं व्याहरेत् क्वचित् ॥

म. शा. २६२-

## देवः

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ॥

भ. ७—६,

## देवभक्तिः

यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ।

रा. अयो. १०२—३

## दैवम्

१

दैवं चेष्टयते सर्वं हतं दैवेन हन्यते ।
नैवार्थेन च कामेन विक्रमेण न चाज्ञया ।
शक्या दैवगतिर्लोके निवर्तयितुमुद्यता ॥

रा. यु. ११३. २४—२५

२

दैवेनोपहतं राजन् न कर्तव्यं च पौरुषम् ।
स दैवमेवाश्रयेत नान्यत्तस्य परायणम् ॥

म, आदि. ३०—३८

३

न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः ।

रा. यु. ४९—२८.

४

अप्रमत्तः प्रमत्तेषु विधिर्जागर्ति जन्तुषु ।
नहि तस्य प्रियः कश्चित् न द्वेष्यो न च मध्यमः ॥

म. आ. ११९—५०.

५

ऐश्वर्ये वा सुविस्तीर्णे व्यसने वाऽतिदारुणे ।
रज्ज्वेव पुरुषं बद्ध्वा कृतान्तः परिकर्षति ॥

रा. सु. ३७—३.

६

न बुद्धिशक्त्याध्ययनेन शक्यं प्राप्तुं विशेषं मनुजैरकाले ।
मूर्खोऽपि चाप्नोति कदाचिदर्थान् कालो हि सर्वं पुरुषस्य दाता॥

म. शा. २४—६.

७

कुले जन्म तथा वीर्यं आरोग्यं रूपमेव च ।
सौभाग्यमुपभोगश्च भवितव्येन जायते ॥
सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छताम् ।
बहूनामिच्छतां नास्ति समृद्धानां विचेष्टताम् ॥
शीतमुष्णं तथा वर्षं कालेन परिवर्तते ।
एवमेव मनुष्याणां सुखदुःखे नरर्षभ ॥

म. शा. २६—२२, २३, ३३.

८

शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ।
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥

रा. आ. ६९—५०.

९

नियतिः कारणं लोके नियतिः कर्मसाधनम् ।
नियतिः सर्वभूतानां नियोगेष्विह कारणम् ॥

रा. कि. २५—४.

१०

यदा विनाशो भूतानां दृश्यते कालचोदितः ।
तदा कार्ये प्रमाद्यन्ति नराः कालवशं गताः ॥

रा. आ. ५६—१६.

११

कालपाशपरिक्षिप्ताः भवन्ति पुरुषा हि ये ।
कार्याकार्यं न जानन्ति ते निरस्तषडिन्द्रियाः ॥

रा. आ. ३०—१५.

१२

न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित् ।
कालस्य बलमेतावत् विपरीतार्थदर्शनम् ॥

म. स. ७२—११.

१३

नात्मनः कामकारो हि पुरुषोऽयमनीश्वरः ।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥

रा. अयो. १०५—१५.

१४

न कालः कालमत्येति न कालः परिहीयते ।
स्वभावं च समासाद्य न कश्चिदतिवर्तते ॥

न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः ।
न मित्रज्ञातिसम्बन्धः कारणं नात्मनोऽवशः ॥

किं तु कालपरीणामो द्रष्टव्यः साधु पश्यता ।
धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥

रा. कि. २५—६, ७, ८.

## दोषाः

१

हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागः त्रयो दोषा भयावहाः ॥

म. उ. ३२—७३.

२

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत् ॥

म. उ. ३२—७४.

३

कामो लोभश्च दर्पश्च मन्युर्निद्रा विकत्थनम् ।
मान ईर्ष्या च शोकश्च नैतद्दान्तो निषेवते ॥

म. उ. ६०—१९.

४

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निन्द्रा तन्द्री भयं क्रोधः आलस्यं दीर्घसूत्रता ॥

म. उ. ३२—८५.

## द्वेषः

द्वेषादसुखमादत्ते यथैव निधनं तथा ॥

म. उ. ५३—१.

## धनम्

इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनस्तु दरिद्राणां जीवतामपि नश्यति ॥

म. शा. ३

## धनविनियोगः

आजीवेभ्यो धनं प्राप्य चतुर्धा विभजेद्बुधः ।
धर्मायार्थाय कामाय आपत्प्रशमनाय च ॥

म. आ. १२

## धर्मः

१

यः स्यादहिंसासंयुक्तः स धर्म इति निश्चयः ।

म. शा. १०८

२

अहिंसा सत्यमक्रोधः तपो दानं दमो मतिः ।
अनसूयाप्यमात्सर्यं अनीर्ष्या शीलमेव च ।
एष धर्मः कुरुश्रेष्ठ कथितः परमेष्ठिना ॥

म. शा. १००—११,

३

अक्रोधः सत्यवचनं संविभागश्च सर्वशः ।
प्रजनं स्वेषु दारेषु शौचमद्रोह एव च ।
आर्जवं भृत्यभरणं त एते सार्ववर्णिकाः ॥

म. शा. ५४—९

४

अद्रोहः सत्यवचनं संविभागो दमः क्षमा ।
प्रजनं स्वेषु दारेषु मार्दवं ह्रीरचापलम् ।
एवं धर्मं प्रधानेष्टं मनुः स्वायम्भुवोऽब्रवीत् ॥

म. शा. २०—२६, २७.

५

आनृशंस्यमहिंसा चाप्रमादस्संविभागिता ।
श्राद्धकर्मातिथेयश्च सत्यमक्रोध एव च ॥
स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्मस्साधारणो नृप ॥

म. शा. २८०—२३, २४.

६

निवृत्तिः कर्मणः पापात् सततं पुण्यशीलता ।
सद्भिश्च समुदाचारः श्रेय एतदसंशयम् ॥

म. शा. २७१—१६, १७ ॥

७

धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।

रा. अयो—२१, ४१.

८

दानं यज्ञाः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो राजन् फलवान् प्रेत्य चेह च ॥

९

नासौ धर्मो यत्र न सत्यमस्ति ।

म. स. ६०—६०.

१०

धर्मादर्थः प्रभवते धर्मात्प्रभवते सुखम् ।
धर्मेण लभते सर्वं धर्मसारमिदं जगत् ॥

आत्मानं नियमैस्तैस्तैः कर्शयित्वा प्रयत्नतः ।
प्राप्यते निपुणैर्धर्मः न सुखाल्लभ्यते सुखम् ॥

रा. आ. ९—३०,

११

प्राणी धर्मसमायुक्तो गच्छते स्वर्गतिं पराम् ।
तथैवाधर्मसंयुक्तो नरकायोपपद्यते ।
धर्म एको मनुष्याणां सहायः पारलौकिकः ॥

म. आ. १०० १५,

१२

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यः पार्थिवेन विशेषतः ॥

म. आ. १२०—

१३

एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा तृप्तिः अहिंसैका सुखावहा ॥

म. उ. ३२—

१४

नास्ति भूमौ दानसमं नास्ति दानसमो निधिः ।
नास्ति सत्यात्परो धर्मः नानृतात्पातकं परम् ॥

म. आ. ११७—२

१५

नास्ति विद्यासमं चक्षुः नास्ति सत्यसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥

नित्यं क्रोधात्तपो रक्षेत् श्रियं रक्षेच्च मत्सरात् ।
विद्यां मानापमानाभ्यां आत्मानं तु प्रमादतः ॥
आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं न सत्याद्विद्यते परम् ॥

म. शा. ३१५—६, ११, १२.

१६

विरिक्तस्य यथा सम्यक् घृतं भवति भेषजम् ।
तथा निर्हृतदोषस्य प्रेत्य धर्मस्सुखावहः ॥

म. शा. २९२—१८.

१७

धनेन किं यन्न ददाति नाश्नुते
बलेन किं येन रिपून्न बाधते ।
श्रुतेन किं येन न धर्ममाचरेत्
किमात्मना यो न जितेन्द्रियो वशी ॥

म. शा. ३०७—७१.

१८

यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते ।
स प्रेत्य लभते लोकान् अक्षयानिति शुश्रुम ॥

म. शा. १३४—१८.

१९

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

भ. ३—३५.

२०

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥
नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः ।
विनश्यत्याचरन्मौढ्याद्यथा रुद्रोऽब्धिजं विषम् ॥

भा. १०, ३३—३०, ३१.

# धर्ममार्गः

इज्याध्ययनध्यानानि तपस्सत्यं क्षमादयः ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधस्स्मृतः ॥
तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति ॥
अत्र पूर्वश्चतुर्वर्गः पितृयाणपथे स्थितः ।
उत्तरं देवयानं तु सद्भिराचरितं तथा ॥

# धैर्यम्

१

व्यसने वाऽर्थकृच्छ्रे वा भये वा जीवितान्तके ।
विमृशन्वै स्वया बुद्ध्या धृतिमान्नावसीदति ॥
बालिशस्तु नरो नित्यं वैक्लब्यं योऽनुवर्तते ।
स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥

रा. कि. ७—९,

२

भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैस्समतामियात् ॥

म. शा. ३१६—१२,

# निर्वेदः

धिगिदं जीवितं लोके गतसारमनर्थकम् ।
दुःखमूलं पराधीनं भृशमप्रियभावि च ॥

जीविते परमं दुःखं जीविते परमो ज्वरः ।
जीविते वर्तमानस्य द्वन्द्वानामागमो ध्रुवः ॥

## निस्पृहत्वम्

अर्थाः खलु समृद्धा हि गाढं दुःखं विजानताम् ।
असमृद्धास्त्वपि सदा मोहयन्त्यविचक्षणान् ॥

म. शा. २६१—५.

## नृपः

ब्रह्मा जनार्दनश्शम्भुः इन्द्रो वायुर्यमो रविः ।
हुतभुग्वरुणो धाता पूषा भूमिर्निशाकरः ।
नृपस्यैते शरीरस्थाः सर्वदेवमयो नृपः ॥

## पञ्चयज्ञाः

पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥

म. शा. १३४—२६.

## पण्डितः

१

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।
इहैव तैर्जितः स्वर्गः येषां साम्ये स्थितं मनः ॥

म. ५—१८, १९.

२

श्रेयान् हि पण्डितः शत्रुर्न हि मित्रमपण्डितम् ।

म. शा. १३८—४६.

# पतिः

१

न पिता नात्मजो नात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥

रा. अयो. २७-

२

गतिरेका पतिर्नार्या द्वितीया गतिरात्मजः ।
तृतीया ज्ञातयो राजंश्चतुर्थी नैव विद्यते ॥

रा. अयो. ६१—

३

नातन्त्री विद्यते वीणा नाचक्रो विद्यते रथः ।
नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥

रा. अयो. ३९—

४

भर्ता तु खलु नारीणां गुणवान्निर्गुणोऽपि वा ।
धर्मं विमृशमानानां प्रत्यक्षं देवि दैवतम् ॥

रा. अयो. ६२-

५

मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥

रा. अयो. ३९—

६

नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥

म. शा. २३४—

७

अयं एकः पतिः स्त्रीणां पूर्वमेव प्रकल्पितः ।

म. अ

# पथ्यवचनम्

१

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥

रा आ. ३७—२ । यु १६—२०.

२

लभ्यः खलु प्रातिपीयो नरोनु प्रियवागिह ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥

म. स. ५८—१७.

३

अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेत् व्याहृतं तद्द्वितीयम् ।
धर्मं वदेत् व्याहृतं तत् तृतीयं
प्रियं वदेत् व्याहृतं तच्चतुर्थम् ॥

म. शा. २८३—३८.

# परद्रव्यवर्जनम्

१

अनर्थाचरणं तात परस्वहरणं भृशम् ।
उभयोर्लोकयोर्दुःखं सुहृदामवमाननम् ॥

म. स. ५३—७ ॥, ८.

२

परस्वानां च हरणं परदाराभिमर्शनम् ।
सुहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः ॥

रा. यु. ८७—२३.

## परबुद्धिः

यश्चित्तमन्वेति परस्य राजन् वीरः कविः स्वामतिपत्य दृष्टिं
नावं समुद्रे इव बालनेत्रां आरुह्य घोरे व्यसने निमज्जेत् ॥

म. स. ५७

## परस्त्रीवर्जनम्

१

परदाराभिमर्शात्तु नान्यत्पापतरं महत् ।

रा. आ. ३८—

२

अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम् ।
नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥

रा. सु. २१-

## परिवादः

न वाच्यः परिवादो वै न श्रोतव्यः कथञ्चन ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

म. शा. १२२—

## पातिव्रत्यम्

१

नास्ति यज्ञः स्त्रियाः कश्चित् न श्राद्धं नोपवासकम् ।
धर्मस्तु भर्तृशुश्रूषा तया स्वर्गं जयत्युत ॥

म. आ. ४१—

२

एतद्धि परमं नार्याः कार्यं लोके सनातनम् ।
प्राणानपि परित्यज्य भर्तुर्हि हितमाचरेत् ॥

यज्ञैस्तपोभिर्नियमैः दानैश्च विविधैस्तथा ।
विशिष्यते स्त्रिया भर्तुः नित्यं प्रियहितेप्सुता ॥

म. आदि. १५५—४, २५

३

पतिशुश्रूषणान्नार्यास्तपो नान्यद्विधीयते ।

रा. अयो. ११८—९.

४

पतिव्रतानां नाकस्मात् पतन्त्यश्रूणि भूतले ।

रा. यु. ११४—६७.

५

भर्ता नाम परं नार्या भूषणं भूषणादपि ।

रा. सु. १६—२६.

६

नगरस्थो वनस्थो वा पापो वा यदि वा शुभः ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥

रा. अयो. ११७—२३, २४.

७

दुःशीलः कामवृत्तो वा धनैर्वा परिवर्जितः ।
स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥

रा. अयो. ११७—२४.

८

वरमाहूय विधिना पित्रा दत्ता यथाऽर्थिने ।
सा पत्नी तु बुधैरुक्ता सा भर्या तु पतिव्रता ॥

म. आदि. २०८—६.

९

स्त्रीधर्मः पूर्वमेवायं निर्मितो मुनिभिः पुरा ।
सहधर्मचरी भर्तुः एका एकस्य चोच्यते ॥

म. आदि.

१०

यद्यदिच्छति वै भर्ता धर्मकामार्थकारणात् ।
तथैवानुप्रिया भूत्वा तथैवोपचरेत् पतिम् ॥

पतिव्रतात्वं नारीणां एतदेव सनातनम् ॥

कुपितं वाऽर्थहीनं वा श्रान्तं वोपचरेत्पतिम् ।
यथा सन्तुष्टः स्वस्थश्च तथा सन्तोषयेत्पतिम् ॥

अप्रियं च हितं ब्रूयात् तस्य धर्मार्थकाङ्क्षया ।
पतिर्हि दैवतं स्त्रीणां पतिर्बन्धुः पतिर्गतिः ॥

आढ्यं वा रूपयुक्तं वा विरूपं धनवर्जितम् ।
या पतिं तोषयेत् साध्वी सा पत्नीनां विशिष्यते ॥

म. आ. १२६—१२, १३ । १२७—१६, १७॥, २४ ॥, ३

## पानम्

न हि धर्मार्थसिद्ध्यर्थं पानमेवं प्रशस्यते ।
पानादर्थश्च धर्मश्च कामश्च परिहीयते ॥

रा. कि. ३३—४

## पापपुण्ये

सकृत्कृत्वा पापमबुद्धिपूर्वं पुण्यानि चेत्कुरुते बुद्धिपूर्वम् ।
स तत्पापं नुदते पुण्यशीलो वासो यथा मलिनं क्षारयुक्त्या

म शा. १३५—७

## पापम्

१

आत्मसाक्षी भवेन्नित्यं आत्मनस्तु शुभाशुभे ।
मनसा कर्मणा वाचा न च काङ्क्षेत पातकम् ॥

म. आ, १२२—६

२

मानसाद्वाङ्मयं पापं विशिष्टमिति लक्ष्यते ।
वाङ्मयादपि वै पापात् शारीरं गण्यते बहु ॥

एवं पापयुतं कर्म त्रिविधं पातयेन्नरम् ।
परोपतापजननं अत्यन्तं पातकं स्मृतम् ॥

म. आ. १२८—१५, १६.

३

प्राणातिपातं स्तैनत्वं परदाराभिमर्शनम् ।
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ॥

असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
एतानि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥

अनभिध्या परस्वेषु सर्वभूतेषु सौहृदम् ।
कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् ।
तस्माद्वाक्कायमनसा नाचरेदशुभं नरः ॥

म. आ. १८—४, ५, ६, ६॥.

४

राजहा ब्रह्महा गोघ्नः चोरः प्राणिवधे रतः ।
नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥

सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः ।
लोकं पापात्मनामेते गच्छन्त्यत्र न संशयः ॥

रा. कि. १७— ३४, ३५, ३५॥

५

गोकुलस्य तृषार्तस्य जलार्थमभिधावतः ।
उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातिनम् ॥

चक्षुषा विप्रहीणस्य पङ्गोरथ जडस्य वा ।
हरेत यश्च वित्तानि तं विद्याद्ब्रह्मघातिनम् ॥

आश्रमे वा वने वा यो ग्रामे वा यदि वा पुरे ।
अग्निं समुत्सृजेत्क्रोधात् तं विद्याद्ब्रह्मघातिनम् ॥

म. आ. ३०—७, १२,

६

अवश्यं लभते कर्ता फलं पापस्य कर्मणः ।
घोरं पर्यागते काले द्रुमः पुष्पमिवार्तवम् ॥
न चिरात्प्राप्यते लोके पापानां कर्मणां फलम् ।
सविषाणामिवान्नानां भुक्तानां क्षणदाचर ॥

रा. आ. २९—८,

७

यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥

म. आ. १२१

८

एकस्तु कुरुते पापं फलं भुङ्क्ते महाजनः ।
भोक्तारस्तत्र मुच्यन्ते कर्ता दोषेण लिप्यते ॥

म. आदि. ८५

९

इच्छयेह कृतं पापं सद्य एवोपसर्पति ।
कृतं प्रतिकृतं तेषां न नश्यति शुभाशुभम् ॥
पापं कर्म कृतं किञ्चित् यदि तस्मिन्न विद्यते ।
निपात्यतेऽस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु ॥

म. शा. १२९—१९,

## पिता

१

पिता हि दैवतं तात दैवतानामपि स्मृतम् ।

२

शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते ।
क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मदर्शने ॥

भ. आदि ८३ २५.

# पितृसेवा

स्वर्गो धनं वा धान्यं वा विद्या पुत्राः सुखानि च ।
गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम् ॥
देवगन्धर्वगोलोकान् ब्रह्मलोकांस्तथा नराः ।
प्राप्नुवन्ति महात्मानः मातापितृपरायणाः ॥
पितुर्हि वचनं कुर्वन् न कश्चिन्नाम हीयते ।
सुसंश्रित्य पितुर्वाक्यं पितुर्वा ब्राह्मणस्य वा ।
न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठताम् ॥

# पुण्यदेशः

पुण्यदेशाभिगमनं पवित्रं परमं स्मृतम् ।

म. शा. १३५—४९.

# पुण्यक्षेत्रम्

अथ देशान्प्रवक्ष्यामि धर्मादिश्रेय आवहान् ।
स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥
बिम्बं भगवतो यत्र सर्वमेतच्चराचरम् ।
यत्र ह ब्राह्मणकुलं तपो विद्यादयान्वितम् ।
यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ॥

भा. ७, १४— २७, २८, २९.

# पुत्रः

१

पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः पितॄन्यः पाति सर्वतः ॥

रा. अयो. १०७—

२

इह चामुत्र चार्थाय पुत्रानिच्छन्ति मातरः ।
इह वा तारयेत्पुत्रः प्रेत्य वा तारयेत्पितॄन् ।
नात्र चित्रं भवेत्किञ्चित् पुनातीति च पुत्रकः ॥

म. आ. १२—५९,

३

एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत् ।
यत्रासौ प्रथितो लोकेष्वक्षय्यकरणो वटः ॥

म. आ ७७—

४

एष्टव्या बहवः पुत्राः गुणवन्तो बहुश्रुताः ।
तेषां वै समवेतानां अपि कश्चिद्गयां व्रजेत् ॥

रा. अयो. १०७

५

प्रतिकूलः पितुर्यश्च न स पुत्रस्सतां मतः ।
मातापित्रोर्वचनकृत् हितश्च विभवस्य च ।
स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु ॥

म. आदि. ६९—१९,

६

यवीयानात्मनः पुत्रः शिष्यश्चापि गुणोदितः ।
पुत्रवत्ते त्रयश्चिन्त्याः धर्मश्चेदत्र कारणम् ॥

रा. कि. १८—

# पुनर्जन्म

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥

भ. ८—१६.

# पुरुषकारः

यथा बीजं विना क्षेत्रं नन्ध्यं भवति निष्फलम् ।
तथा पुरुषकारेण विना दैवं न सिद्ध्यति ॥

म. आ. ६—९.

# पुरुषभेदाः

१

सहितो मन्त्रयित्वा यः कर्मारम्भान् प्रवर्तयेत् ।
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥

एकोऽर्थं विमृशेदेकः धर्मे प्रकुरुते मनः ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥

गुणदोषावनिश्चित्य त्यक्त्वा दैवव्यपाश्रयम् ।
करिष्यामीति यः कार्यं उपेक्षेत् स नराधमः ॥

रा. सु. ६—८, ९, १०.

२

उत्तमश्चिन्तितं कुर्यात् प्रोक्तकारी तु मध्यमः ।
अधमोऽश्रद्धया कुर्यात् अकर्तोच्चरितं पितुः ॥

आ १, १८—४४.

# पुरुषोत्तमः

सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि वेदे लोके च प्रथितः पुरुषोत्तमः ॥

भ. १५. १५—

## प्रतिज्ञानिर्वाहः

यो न दद्यात्प्रतिश्रुत्य स्वल्पं वा यदि वा बहु ।
आशास्तस्य हतास्सर्वाः क्लीबस्येव प्रजाफलम् ।
यच्च तस्य हुतं किञ्चित् सर्वं तस्यापहन्यते ॥

म. आ. १३—२, २॥

## प्रत्युपकारः

धर्मलोपो महांस्तावत्कृते ह्यप्रतिकुर्वतः ।
अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ॥

रा. कि. ३३—

## परोपकारः

कृते च प्रतिकर्तव्यमेष धर्मस्सनातनः ।

रा. सु. १—

## प्राणाः

सर्वस्य दयिताः प्राणाः सर्वस्य दयिताः सुताः ।

म. शा. १२९-

## बुद्धिः

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥

म. २—४१.

## भक्तिः

१

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥

भा. ७, ५—२३, २४.

२

भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥
मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यस्स मामेति पाण्डव (पार्थिव) ॥

म. ११—५४, ५५.

३

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ।
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ॥

म. ९ २७, २७॥

४

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

भ. १८—६५, ६

५

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

येऽप्यन्यदेवताभक्ताः यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥

भ. ९—२२,

६

ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ।
प्राप्नुवन्ति तथा कामानिह लोके परत्र च ॥

रा. यु. १२०—

७

अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ।
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥

भा. १०, ८१—३

## भगवत्कथा

वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि ।
वक्तारं पृच्छकं श्रोतॄन् तत्पादसलिलं यथा ॥

भा. १०, १—

# भागवतः

१

भवद्विधा भागवतास्तीर्थीभूताः स्वयं विभो ।
तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता ॥

भा. १—१३, ९.

२

तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ताः हतापि वा ।
नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि ॥

भा. १—१८, ४८.

३

येषां स एव भगवान् दययेदनन्तः
सर्वात्मनाश्रितपदो यदि निर्व्यलीकम् ।
ते दुस्तरामतितरन्ति च देवमायां
नैषां ममाहमिति धीः श्वसृगालभक्ष्ये ॥

भा. २—७, ४२.

४

नारायणपराः सर्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥

भा. ६—१७, २८.

५

न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्नाः ॥

१०—१६, ३७.

६

देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम् ॥

भा. ११ ५, ४१.

७

येषां न तुष्टो भगवान् यज्ञलिङ्गो जनार्दनः ।
तेषां श्रमो ह्यपार्थाय यदाऽऽत्मा नादृतः स्वयम् ॥

भा. ३१--३

## भार्या

भृत्यानां भरणार्थाय आत्मनः पोषणाय च ।
दाने गृहीता या नारी सा भार्येति बुधैर्मता ॥

धर्मतो वरयित्वा तु आनीय स्वं निवेशनम् ।
न्यायेन दत्ता तारुण्ये दाराः पितृकृता भवेत् ॥

जनयेद्यातु भर्तारं जाया इत्येव नामतः ।
दाराः पत्नी च भार्या च जाया चेति चतुर्विधा ।
चतस्र एवाग्निसाक्ष्याः क्रियायुक्ताश्च धर्मतः ॥

म. आदि. २०८—७, ८, ९

## भूतानि

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव............॥

म. २—

## मद्यमांसनिषेधः

न हि मांसं तृणात्काष्ठात् उपलाद्वापि जायते ।
हत्वा जन्तुं ततोमांसं ततो दोषोऽस्ति भक्षणे ॥

म. अा. १०४—

# मनुष्यजन्म

१

लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते
 मानुष्यमर्थदमनित्यमपीह धीरः ।
तूर्णं यतेत न पतेदनुमृत्यु यावत्
 निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥

भा. ११, ९—२९.

२

नृदेहमाद्यं सुलभं सुदुर्लभं
 प्लवं सुकल्पं गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं
 पुमान्भवाब्धिं न तरेत्स आत्महा ॥

भा ११, २०—१७.

# मरणम्

सर्वेण खलु मर्तव्यं मर्त्यलोके प्रसूतया ।
कृतान्तविहिते मार्गे को मृतं जीवयिष्यति ॥

म. शा. १३६—२०.

# मर्यादा

स्थापयेदेव मर्यादां जनचित्तप्रमादिनीम् ।
अल्पा ह्यर्थेषु मर्यादा लोके भवति पूजिता ॥

म. शा. १२३—१३.

# माया

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥

भ. ७—१४.

# मित्रम्

१

सतां साप्तपदं मित्रम् ।

म. शा. १२८—५

२

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
अर्थतस्तु निबध्यन्ते मित्राणि रिपवस्तथा ॥

म. शा. १२८—१०

३

नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥
मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये ।
शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः ॥

म. शा. १२८- १२३, १३

४

कृत्वा हि पूर्वं मित्राणि यः पश्चान्नाधितिष्ठति ।
न स मित्राणि लभते कृच्छ्रास्वापत्सु दुर्मतिः ॥

म. शा. १२८—१२

५

सर्वथा सुकरं मित्रं दुष्करं परिपालनम् ।
अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥

रा. कि. ३२—

६

स सुहृत् यो विपन्नार्थं दीनमभ्युपपद्यते ।
स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते ॥

रा. यु. ६३— २

७

आढ्यो वाऽपि दरिद्रो वा दुःखितः सुखितोऽपि वा ।
निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ॥

धनत्यागः सुखत्यागो देहत्यागोऽपि वा पुनः ।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥
उपकारफलं मित्रं अपकारोऽरिलक्षणम् ।
दुःखितस्सुखितो वाऽपि सख्युर्नित्यं सखा गतिः ॥

रा. कि. ८—८, ९, २०॥, ४०.

८

विद्या शौचं च दाक्ष्यं च बलं शौर्यं च पञ्चमम् ।
मित्राणि सहजान्याहुः वर्तयन्तीह यैर्बुधाः ॥

म. शा. १२९—८१.

## मूढः

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥
परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः सर्वमूढतमो नरः ॥

म. उ. ३२—४२, ४६.

## मृत्युः

मृत्युर्जन्मवतां वीर देहेन सह जायते ।
अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥
देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः ।
देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥
व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति ।
यथा तृणजलूकैवं देही कर्मगतिं गतः ॥

भा. १०, १—३८, ३९, ४०.

## यमलोकः

१

प्राणिनः सुकृतं चैव भुञ्जानांश्चैव दुष्कृतम् ।
अपश्यत्सैनिकांश्चास्य यमस्यानुचरैस्सह ॥

यमस्य पुरुषैरुग्रैर्घोररूपैर्भयानकैः ।
ददर्श वध्यमानांश्च क्लिश्यमानांश्च देहिनः ॥
क्रोशतश्च महानादं तीव्रनिष्टनतत्परान् ।
कृमिभिर्भक्ष्यमाणांश्च सारमेयैश्च दारुणैः ॥
श्रोत्रायासकरा वाचो वदतश्च भयावहाः ।
सन्तार्यमाणान्वैतरणीं बहुशः शोणितोदकाम् ॥
वालुकासु च तप्तासु तप्यमानान् मुहुर्मुहुः ।
असिपत्रवने चैव भिद्यमानानधार्मिकान् ॥
रौरवे क्षारनद्यां च क्षुरधारासु चैव हि ।
पानीयं याचमानांश्च तृषितान् क्षुधितानपि ॥
शवभूतान् कृशान् दीनान् विवर्णान् मुक्तमूर्धजान् ।
मलपङ्कधरान् दीनान् रूक्षांश्च परिधावतः ॥
ददर्श रावणो मार्गे शतशोऽथ सहस्रशः ॥

रा. उ. २१ (१०–

२

कांश्चिच्च गृहमुख्येषु गीतवादित्रनिःस्वनैः ।
प्रमोदमानानद्राक्षीद्रावणः सुकृतैः स्वकैः ॥
गोरसं गोप्रदातारो ह्यन्नश्चैवान्नदायिनः ।
गृहांश्च गृहदातारः स्वकर्मफलमश्नतः ॥
सुवर्णमणिमुक्ताभिः प्रमदाभिरलङ्कृतान् ।
धार्मिकानपरांस्तत्र दीप्यमान् स्वतेजसा ।
ददर्श स महाबाहू रावणो राक्षसाधिपः ॥

रा. उ. २१. (१८–

## याचनम्

ननु स्वार्थपरो लोको न वेद परसङ्कटम् ।
यदि वेद न याचेत नेति नाह यदीश्वरः ॥

भा. ६, १०

# योगः

१

चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ।
दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥
अयं स्वस्त्ययनः पन्थाः द्विजातेर्गृहमेधिनः ।
यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥

भा १०, ८४—३६, ३७.

२

योगिनोऽपक्वयोगस्य युञ्जतः काय उत्थितैः ।
उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥
योगधारणया कांश्चिदासनैर्धारणान्वितैः ।
तपोमन्त्रौषधैः कांश्चिदुपसर्गान्विनिर्दहेत् ॥
कांश्चिन्ममानुध्यानेन नामसङ्कीर्तनादिभिः ।
योगेश्वरानुवृत्त्या वा हन्यादशुभदान् शनैः ॥

भा. ११, २८—३८, ३९, ४०.

# रागः

१

कोटराग्निर्यथाऽशेषं समूलं पादपं दहेत् ।
धर्मार्थिनं तथाऽल्पोपि रागदेषो विनाशयेत् ॥

२

तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी नृणाम् ।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥

३

रागाभिभूतः पुरुषः कामेन परिकृष्यते ।
इच्छा सञ्जायते तस्य ततस्तृष्णा प्रवर्तते ॥

## राजदोषः

अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः ।
राजदोषपरामृष्टाः तिष्ठन्ते नापराधिनः ॥

रा. यु. २९—

## राजधर्मः

१

एष हि प्रथमो धर्मः क्षत्रियस्याभिषेचनम् ।
येन शक्यं महाप्राज्ञ प्रजानां परिपालनम् ॥

रा. अयो. १०६—

२

चातुर्वर्ण्यहितार्थं हि कर्तव्यं राजसूनुना ।
नृशंसमनृशंसं वा प्रजारक्षणकारणात् ॥
पातकं वा सदोषं वा कर्तव्यं रक्षता सदा ।
राज्यभारनियुक्तानां एष धर्मः सनातनः ॥

रा. बा. २५, १७—

३

अकृतात्मानमासाद्य राजानमनये रतम् ।
समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ॥

रा. सु. २१—

## राजा

१

राजा भर्ता गुरुश्रेष्ठः सर्वेषामीश्वरः प्रभुः ।

## रामराज्यम्

कालवर्षी च पर्जन्यः सस्यानि समवर्धयन् ।
नित्यं सुवर्षमेवासीत् रामे राज्यं प्रशासति ॥

नान्योन्येन भयं चासीत् स्त्रीणामपि कुतो नृणाम् ।
धर्मनित्याः प्रजाश्चासन् रामे राज्यं प्रशासति ॥

प्राणिनो नाप्सु मज्जन्ति नानर्थे पावकोऽदहत् ।
न व्यालकाद्भयं चासीत् रामे राज्यं प्रशासति ॥

सन्तुष्टास्सर्वसिद्धार्थाः निर्भयाः स्वैरचारिणः ।
नराः सत्यव्रतधराः रामे राज्यं प्रशासति ॥

नित्यपुष्पफलाश्चैव पादपा निरुपद्रवाः ।
सर्वा द्रोणदुघा गावो रामे राज्यं प्रशासति ॥

म. शा. २७—४३, ४४, ४५, ४६, ४७.

## रिपुः

यथाऽऽमयोऽङ्गे समुपेक्षितो नृभिः
न शक्यते रूढपदश्चिकित्सितुम् ।
तथेन्द्रियग्राम उपेक्षितस्तथा
रिपुर्महान् बद्धबलो न चाल्यते ॥

भा. १०, ४—३८

## लोभः

एको लोभो महाग्राहो लोभात्पापं प्रवर्तते ।
सर्वे दोषास्तथा लोभात् तस्माल्लोभं विवर्जयेत् ॥

जनको युवनाश्वश्च वृषदर्भः प्रसेनजित् ।
लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये जनाधिपाः ॥

म. शा. १३८—२, १२, १३.

## वर्ज्यानि

१

कुभार्यां च कुपुत्रं च कुराजानं कुसौहृदम् ।
कुदेशं च कुसम्बन्धं दूरतः परिवर्जयेत् ॥

म. शा. १२९—१०.

२

अप्रियं परुषं चापि परद्रोहं परस्त्रियम् ।
अधर्ममनृतं चैव दूरात्प्राज्ञो विवर्जयेत् ॥
धर्मं सत्यं शुभं न्याय्यं महतीं प्राणिनां दयाम् ।
अजिह्ममशठत्वं च यत्नतः परिमार्गत ॥

म. शा. १३६—७५,

## वाक्पारुष्यम्

१

संरोहति शरैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥

म. आदि. ६३—

२

वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि
परस्य नामर्मसु ते पतन्ति तान् पण्डितो नावसृजेत् परेषु

म. शा. २८३-

३

नारुन्तुदः स्यान्न नृशंसवादी न चातिभीतः परमाददीत ।
यथाऽस्य वाचा पर उद्विजेत न तां वदेद्रुशतीं पापलोक्याः

म. स. ६०.

## विद्या

विद्यायोगस्तु सर्वेषां पूर्वमेव विधीयते ।
कार्याकार्यं विजानन्ति विद्यया देवि नान्यथा ॥
विद्यया स्फीयते ज्ञानं ज्ञानात्तत्त्वविदर्शनम् ।
दृष्टतत्त्वो विनीतात्मा सर्वार्थस्य च भाजनम् ॥

म. आ. १२२—१४,

## विभूतिः

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।

म. १०—४२

## विवेकः

१

प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसि ॥

म. आदि. ८७—१६.

२

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥
अर्थकृच्छ्रेषु दुःखेषु व्यापत्सु स्वजनेष्वपि ।
शरीरे मानसे चैव न सीदन्त्यसुखे बुधाः ॥

३

अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासः गृध्येद्देषु न पण्डितः ॥

## विष्णुनामसङ्कीर्तनम्

१

सर्वेषामप्यघवतां इदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोः यतस्तद्विषया मतिः ॥

भा. ६, २—१०.

२

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणं अशेषाघहरं विदुः ॥

भा. ६, २—१४.

# विष्णुपूजा

१

यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥

भा. ४, ३१-१

२

यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम् ।
एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥

भा. ८, ५-२

# वृत्तम्

न गृहाणि न वस्त्राणि न प्राकारस्तिरस्क्रिया ।
नेदृशा राजसत्काराः वृत्तमावरणं स्त्रियः ॥

रा. यु. ११७-२

# वृद्धाः

न ते वृद्धा ये न वदन्ति धर्मम् ।

म. स. ६०-६

# वेदः

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।
वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुतम् ॥

भा. ६, १-४

# वैरम्

१

वैरं पञ्चसमुत्थानं बुध्यन्ते तत्र पण्डिताः ।
स्त्रीकृतं वास्तुजं वाग्जं ससपत्नापराधजम् ॥

म. शा. १२९-३

२

न शुष्कवैरं कुर्वीत न बाहुभ्यां नदीं तरेत् ।

३

वैरानुबन्ध एतावान् आमृत्योरिह देहिनाम् ।

भा. ८, १९—१३.

४

मरणान्तानि वैराणि ।

रा. यु. १११—१००.

## वैराग्यम्

१

कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ।
क तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः ॥

भा ७, १४—१३.

२

त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ।
विण्मूत्रपूये रमतां क्रिमीणां कियदन्तरम् ॥

भा. ११, २६—२१.

३

प्रसक्तबुद्धिर्विषयेषु यो नरो न विन्दते ह्यात्महितं कदाचन ।
स सर्वभावानुगतेन चेतसा नृपामिषेणेव झषोऽनुकृष्यते ॥

म. शा. २८२—१५.

## वैश्वदेवप्रशंसा

श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ।
वैश्वदेवं हि नामेदं सायं प्रातर्विधीयते ॥
विघसाशी भवेत्तस्मान्नित्यं चामृतभोजनः ।
विघसं भृत्यशेषं तु यज्ञशेषं तथामृतम् ॥

## व्यसनम्

त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत ।
मिथ्यावाक्यं तु परमं तस्माद्गुरुतरावुभौ ।
परदाराभिगमनं विना वैरं च रौद्रता ॥

रा. आ. ९—३

## शमः

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वं इति मत्वा शमं व्रजेत् ॥

म. आदि. ५९—५२,

## शरणम्

१

भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेतान् शरणं प्राप्तान् विषमेऽपि न सन्त्यजेत् ॥

म. उ. ३२—

२

महान् धर्मो महाराज शरणागतपालने ।
नृगप्रभृतयो राजन् राजानः शरणागतान् ।
परिपाल्य महात्मानः संसिद्धिं परमां गताः ॥

म. शा. १३३ —

३

बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् ।
न हन्यादानृशंस्यार्थमपि शत्रुं परंतप ॥
आर्तो वा यदि वा दृप्तः परेषां शरणागतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥

रा. यु. १८—२.

४

यो हि कश्चिद्द्विजं हन्यात् गां वा लोकस्य मातरम् ।
शरणागतं च यो हन्यात् तुल्यं तेषां हि पातकम् ॥

म. शा. १३४—१६.

# शिष्यः

यथा हि कनकं शुद्धं तापच्छेदनिघर्षणैः ।
परीक्षेत तथा शिष्यान् ईक्षेत् कुलगुणादिभिः ॥

म शा ३१३---४६.

# शीलम्

१

शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
न हि किंचिदसाध्यं स्यात् लोके शीलवतां सताम् ॥

म. शा. ११५—१५.

२

न सन्ध्यायां स्वपेन्नित्यं स्नायाच्छुद्धस्सदा भवेत् ।
प्रातः पितरमुत्थाय पूर्वमेवाभिवादयेत् ॥

म. आ. ९४—७२.

# शुश्रूषा

१

मातापित्रोर्गुरूणां च पूजा बहुमता मम ।
अत्र वर्तन् नरो लोकान् यशश्च महदश्नुते ॥
यदेते ह्यनुजानीयुः स धर्म इति निश्चयः ।
सर्वे तस्यादृता लोकाः यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥

म. शा. ९९—२, ३॥, १०॥.

२

तपश्शौचवता नित्यं सत्यधर्मरतेन च ।
मातापित्रोरहरहः पूजनं कार्यमञ्जसा ॥

म. शा. ११९

## शोकः

१

शोको नाशयते धैर्यं शोको नाशयते श्रुतम् ।
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥

रा. अयो. ६२—

२

ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् ।
तेजश्च क्षीयते तेषां न त्वं शोचितुमर्हसि ॥

रा. कि. ७—

३

पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्यापकर्षकः ।

रा. यु. २—

४

शोचतो ह्यवसीदन्ति सर्वार्था विदितं हि ते ।

रा. कि. २७

५

न विषादे मनः कार्यं विषादो दोषवत्तमः ।
विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥

रा. कि. ६४—

## सङ्घः

सर्वथा सहितैरेव दुर्बलैर्बलवानपि ।
अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥

# सज्जनः

१

अक्रोधः सत्यवचनं अहिंसा दम आर्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा तपश्शमः ॥
यस्मिन्नेतानि दृश्यन्ते न चाकार्याणि भारत ।
भावतो विनिविष्टानि तत्पात्रं मानमर्हति ॥

म. आ. ३६—८, ९.

२

श्रद्धां त्यागं निर्वृतिं चापि पूजां सत्यं धर्मं यः कृतश्चाभ्युपैति ।
कामद्वेषौ त्यज्य सर्वेषु तुल्यः श्रद्धाभूतस्सर्वयज्ञेषु योग्यः ॥

म. आ. ११—२१.

३

वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं वीरं अत्यर्थं श्रीर्निषेवते ॥

म. उ. ११६—३०.

४

अनिष्ठुरोऽनहङ्कारः निर्द्वन्द्वो वीतमत्सरः ।
तुल्यनिन्दास्तुतिर्मौनी समलोष्टाश्मकाञ्चनः ।
समश्शत्रौ च मित्रे च निर्वाणमधिगच्छति ॥

म. आ. १३१—३९॥, ४०.

५

अब्रुवन् कस्यचिन्निन्दां आत्मपूजामवर्णयन् ।
विपश्चित् गुणसम्पन्नः प्राप्नोत्येव महद्यशः ॥
न लोके दीप्यते मूर्खः केवलात्मप्रशंसया ।
अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते ॥

म. शा. २७१—२८, ३१.

६

न चैवोक्ता न चानुक्ता हीनतः परुषा गिरः ।
भारत प्रतिजल्पन्ति सदा तूत्तमपूरुषाः ॥

स्मरन्ति सुकृतान्येव न वैराणि कृतानि च ।
सन्तः प्रतिविजानन्ति लब्ध्वा प्रत्ययमात्मनः ॥

म. स. ६५—९, १

७

न वैराण्यभिजानन्ति गुणान् पश्यन्ति नागुणान् ।
विरोधं नाधिगच्छन्ति नित्यमुत्तमपूरुषाः ॥

नैवोक्ता नैव चानुक्ताः हीनतः परुषा गिरः ।
अतिजल्पन्ति वै धीराः सदा तूत्तमपूरुषाः ॥

स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ॥

म. स. ६५—२४, २६, २

८

अलोलुपस्तथाऽल्पेप्सुः कामानामविचिन्तकः ।
समुद्रकल्पः पुरुषः स दान्तः परिकीर्तितः ॥

सुवृत्तशीलसम्पन्नः प्रसन्नात्माऽऽत्मविद्बुधः ।
प्राप्येह लोके संमानं स्वर्गतिं प्रेत्य गच्छति ॥

अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
स वै परिणतप्रज्ञः प्रख्यातो मनुजोत्तमः ॥

सर्वभूतहितो मैत्रः यस्मान्नोद्विजते जनः ।
समुद्र इव गम्भीरः प्रज्ञातृप्तः प्रशाम्यति ॥

म. उ. ६०—२१ २२, २३ २४

९

अभुक्त्वा देवकार्याणि ये कुर्वन्त्यविकत्थनाः ।
सन्तुष्टयाथ समायुक्ताः तान्नमस्याम्यहं विभो ॥

सम्यग्ददति ये चेष्टान् क्षान्तान् दान्तान् जितेन्द्रियाः ।
सस्यं धनं क्षितिं गाश्च तान्नमस्यामि यादव ॥

ये भृत्यभरणे सक्ताः सततं चातिथिव्रताः ।
भुञ्जते देवशेषाणि तान्नमस्यामि यादव ॥

म. आ. ३३—९, १०, १२.

१०

क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥

यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किञ्चिदवमन्यन्ते पण्डिता भरतर्षभ ॥

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥

नहृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यस्स पण्डित उच्यते ॥

अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव च ।
विचरत्यसमुन्नद्धो यस्स पण्डित उच्यते ॥

म उ. ३२—२४, २५, २८, ३०, ३३, ३८.

## सत्त्वरजस्तमांसि

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनाम् ॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥

म. १४, ५—८

## सत्यम्

१

धर्मः साधारणः सत्यं सर्ववर्णेषु भारत ।
सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः ॥

सत्यमेव नमस्येत सत्यं हि परमा गतिः ।
सत्यं मोक्षतपोयोगः सत्यं ब्रह्म सनातनम् ॥

सत्यं यज्ञः परः प्रोक्तः सत्ये धर्मं प्रतिष्ठितम् ।
नास्ति सत्यात्परो धर्मः नानृतात्पातकं परम् ।
धृतिर्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत् ॥

म. शा १४२—३, ५, २६.

२

आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः ।
सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः ।
सत्यमेवाक्षया वेदाः सत्येनावाप्यते परम् ॥

रा अयो. १४—३, ७.

३

धर्मः सत्यं परो लोके सत्यं पद्मा समाश्रिता ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥

४

सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।
नास्ति सत्यात्परं दानं नास्ति सत्यात्परं तपः (ततः) ॥

म. आ. १२८—६८.

५

सत्यमेवेश्वरो लोके सत्यं पद्मा श्रिता सदा ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥

रा. अयो. १०९, १३.

६

सत्यस्य वचनं श्रेयः सत्यादपि हितं भवेत् ।
यद्भूतहितमत्यन्तं एतत्सत्यं सतां मतम् ॥

म. शा. ३१५—१३.

७

सत्ये लोकः प्रतिष्ठितः ।

८

सत्यं च धर्मं च पराक्रमं च
भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥

रा. अयो. १०९ – ३१.

९

सत्यवादी हि लोकेऽस्मिन् परमं गच्छति क्षयम् ।

रा. अयो. १०९ – ११.

१०

शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम् ।
सत्येव परिगृह्णाति स वीरः पुरुषोत्तमः ॥

रा. कि. ३०—७२.

११

येऽसूयानृतदम्भेर्ष्याहिंसामानविवर्जिताः ।
न तेषां सत्यशीलानामाशिषो विफलाः कृताः ॥

आ. १०, ७—१३.

१२

सत्यं च नोपहन्तव्यं......

म. शा. १२५—१

१३

न तत्सत्यं यच्छलेनानुविद्धम् ।

म. स. ६०—६१

## सत्सङ्गः

१

सङ्गो यस्संसृतेर्हेतुः असत्सु विहितोऽधिया ।
स एव साधुषु कृतः निस्सङ्गत्वाय कल्पते ॥

भा. ३, २३—५५

२

वस्त्रमम्भस्तिलान् भूमिं गन्धो वासयते यथा ।
पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥
मोहजालस्य योनिर्हि मूढैरेव समागमः ।
अहन्यहनि धर्मस्य योनिस्साधुसमागमः ॥
तस्मात्प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः ।
सद्भिश्च सह संसर्गः कार्यश्शमपरायणैः ॥
येषां त्रीण्यवदातानि विद्या योनिश्च कर्म च ।
ते सेव्यास्ते समास्या हि शास्त्रेभ्योऽपि विशिष्यते ॥
निरारम्भाह्यपि वयं पुण्यशीलेषु साधुसु ।
पुण्यमेवाप्नुयामेह......... ॥

## सद्गुणाः

१

षडेव तु गुणाः पुंसां न हातव्याः कदाचन ।
सत्यं दानमनालस्यं अनसूया क्षमा धृतिः ॥

म. उ. ३२—८८.

२

दमः क्षमा धृतिस्तेजः सन्तोषः सत्यवादिता ।
ह्रीरहिंसाऽव्यसनता दाक्ष्यं चैतत् सुखावहम् ॥

३

क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियाभिजयो धैर्यं मार्दवं ह्रीरचापलम् ॥
अकार्पण्यमसम्भारः संन्तोषः श्रद्दधानता ।
एतानि यस्य राजेन्द्र स दान्तः पुरुषः स्मृतः ॥

म. उ. ६० — १७, १८.

४

त एतदधिगच्छन्ति विष्णोर्यत्परमं पदम् ।
अहं ममेति दौर्जन्यं न एषां देहगेहजम् ॥
अतिवादांस्तितिक्षेत नावमन्येत्त कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥

भा. १२, ६—३३, ३४.

## सन्तोषः

१

सदा सन्तुष्टमनसः सर्वाः सुखमया दिशः ।
शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् ॥

भा. ७, १५—१७.

२

असन्तोषपरा मूढा सन्तोषं यान्ति पण्डिताः ।
अन्तो नास्ति पिपासायाः सन्तोषः परमं सुखम् ।
तस्मात्सन्तोषमेवेह धनं पश्यन्ति पण्डिताः ॥

३

असन्तुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः ।
अकिञ्चनोऽपि सन्तुष्टः शेते सर्वाङ्गविज्वरः ॥

भा १०, ५२—३

## सभा

न सा सभा यत्र न सन्ति वृद्धाः ।

म. स. ६० - ६

## सम्पत्तिः

अद्वैधमनसं युक्तं शूरं धीरं विपश्चितम् ।
न श्रीः सन्त्यजते नित्यं आदित्यमिव रश्मयः ॥

म. शा. २८२—४

## सात्त्विकत्यागः

कायेन वाचा मनसेन्द्रियैर्वा बुध्याऽऽत्मना वाऽनुसृतस्वभावात्
करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥

भा. ११, २—३

## साधकलक्षणम्

कार्ये कर्मणि निर्दिष्टे यो बहून्यपि साधयेत् ।
पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति ॥
न ह्येकः साधको हेतुः स्वल्पस्यापीह कर्मणः ।
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥

रा. सु. १—५,

## साधुत्वम्

१

न हि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति ।

भ. ६—४

२

प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः ।
न व्यथन्ति न हृष्यन्ति यत आत्माऽगुणाश्रयः ॥

भा. १—१८, ५०.

३

साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः ।
हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः ॥

भा. ९, ९—६.

४

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥

भा. १०, ८४—११.

५

नाग्निर्न सूर्यो न च चन्द्रतारका
न भूर्जलं खं श्वसनोऽथ वाङ्मनः ।
उपासिता भेदकृतो हरन्त्यघं
विपश्चितो घ्नन्ति मुहूर्तसेवया ॥

भा. १०, ८४—१२.

६

किं दुस्सहं नु साधूनां विदुषां किमपेक्षितम् ।
किमकार्यं कदर्याणां दुस्त्यजं किं धृतात्मनाम् ॥

भा. १०, १—५८.

## सामर्थ्यम्

नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥

म. शा. १३०—४८

## साक्षी

समक्षदर्शनात्साक्ष्यं श्रवणाच्चेति धारणात् ।
तस्मात्सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते ॥

म. स. ६१—८७.

## सुखदुःखे

१

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥

म. शा. २४—२३.

२

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखान्विते लोके नास्ति सौख्यमनन्तकम् ॥

म. शा. १३६—८५.

३

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्यचाप्रियम् ।

भ. ५—२०.

४

दुःखे न तप्येत सुखे न हृष्येत् समेन वर्तेत सदैव धीरः ।

म आदि. ७३—९.

५

उत्पन्नमिह मानुष्ये गर्भप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ।
सुखं प्राप्य न संहृष्येत् न दुःखं प्राप्य सञ्ज्वरेत् ॥

म आनु. १३१—४९, ५०,

६

यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षति ।
सव्यं बाहुञ्च यस्तक्षेत् समावेतावुभौ मम ॥

म. शा. ३०२—३६.

## संशयः

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।

भ. ४—४०.

## स्त्रियः

१

स्त्रियस्तोषकरा नृणां स्त्रियः पुष्टिप्रदास्सदा ।
पुत्रसेतुप्रतिष्ठाश्च स्त्रियो लोके महाद्युते ॥

म. आ. २७—९१.

२

सर्वथा स्त्री न हन्तव्या......

म. शा. १२५—१२.

## स्थिरवासः

एकत्र चिरवासो हि न प्रीतिजननो भवेत् ।
तापसानां च शान्तानां भवेदुद्वेगकारकः ॥

## स्नेहः

१

स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ।
अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम् ॥

भा. १०, ४७—५, ६.

२

ज्ञानान्वितेषु मुख्येषु शास्त्रज्ञेषु कृतात्मसु ।
न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकदम् ॥

३

मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते ।
स्नेहात्त सज्जते जन्तुः दुःखयोगमुपैति च ॥
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथाऽऽयासः स्नेहात्सर्वं प्रवर्तते ॥
स्नेहात्कारुण्यरागौ च प्रजास्वीर्ष्यादियस्तथा ।
अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुः स्मृतः ॥

## स्वभावः

न धनेन न राज्येन नोग्रेण तपसा तथा ।
स्वभावा विनिवर्तन्ते ये नियुक्ताः शरीरिषु ॥

म शा. ३१७—३६.

## हितम्

सर्वस्वमपि सन्त्यज्य कार्यमात्महितं नरैः ।

म. शा. १२९—८०.



Printed at Tirumalai Tirupati Devasthanams Press, Tirupati and published by the Director, Sri Venkateswara Oriental Institute.

# LIST OF SRI VENKATESVARA ORIENTAL INSTITUTE PUBLICATIONS

| *Sri Venkatesvara Oriental Series :—* | Rs. | A. | P. |
|---|---|---|---|
| 9. **Tirukkural-Kamattuppal** with two old Commentaries Ed. by Sri T. P. Palaniappa Pillai ... | 2 | 0 | 0 |
| 10. **Sri Venkatesvara Vachanamulu**, Ed. by Sri V. Prabhakara Sastri ... | 1 | 8 | 0 |
| 11. **Sringara Sankirtanamulu** by Tallapaka Annamacharyulu. IV Volume of Tallapaka Works Ed. by Sri V. Prabhakara Sastri ... | 2 | 0 | 0 |
| 12. **Kasyapa Jnanakanda (Kasyapa Samhita)** Ed. by Sri R. Parthasarathi Battachar ... | 3 | 0 | 0 |
| 13. **Andhra Kuvalayanandamu** by Ubhaya Bhasha Pravina K. Subrahmanya Sastri ... | 3 | 12 | 0 |
| 14. **Tirukkural-Porutpal** with the Commentaries of Kālingar and Paripperumāl Edited by Sri T. P. Palaniappa Pillai ... | 4 | 0 | 0 |
| 15. **Kathopanishad Bhashya** of Rangaramanuja Ed. with English translation by Dr. K. C. Varadachari and Sri D. T. Tatacharya ... | 3 | 12 | 0 |
| 16. **Sri Venkatesvara Laghu Kritulu** Ed. by Sri V. Prabhakara Sastri ... | 1 | 8 | 0 |
| 17. **Annamacharya Charitramu** Ed. by Sri V. Prabhakara Sastri ... | 2 | 8 | 0 |
| 18. **Tiruvengada [illegible]halapuranam** by Madhurakavi Viraraghavaswa[illegible] Ed. by Sri T.P. Palaniappa Pillai. | 1 | 8 | 0 |
| 19. **Alankarasangraha** by Amritananda Yogi Ed. by Sri P. Balakrishnamurti ... | 3 | 4 | 0 |
| 20. **Subhadra Kalyanamu** (Telugu) by Tallapaka Timmakka, Ed. by Sri V. Prabhakara Sastri ... | 0 | 12 | 0 |
| 20a. **Sankaravilasam** by Chidambaranatha Ed. by Sri T. P. Palaniappa Pillai ... | 3 | 4 | 0 |
| 21. **Janasrayi** (Sanskrit) Ed. by Sri M. Ramakrishna Kavi ... | 1 | 0 | 0 |
| 22. **Adhyatmasankirtanalu** Vol. V by Tallapaka Annamacharyulu (Tel.) Ed. by Sri V. Prabhakara Sastri | 3 | 4 | 0 |
| 23. **Tiruvengada Ula** (Tamil) Ed. by Sri T. P. Palaniappa Pillai ... | 1 | 8 | 0 |
| 24. **Adhyatmasankirtanalu**, Vol. VI by Tallapaka Annamacharyulu (Tel.) Ed. by Sri A. V. Srinivasachari ... | 2 | 0 | 0 |
| 25. **Prasnopanishad Bhashya** of Rangaramanuja (Sanskrit-English) Ed. and translated by Dr. K.C. Varadachari and Sri D. T Tatacharya ... | 2 | 12 | 0 |
| 26. **Sri Venkatesvara Stutiratnamala** (Telugu) Ed. by Sri V. Prabhakara Sastri ... | 1 | 2 | 0 |

*Copies can be had of :*—THE DIRECTOR

S. V. ORIENTAL INSTITUTE, TIRUPATI (Chittoor Dt., S.I.)